**पद्मं मुखमेवेदम्" इत्यादौ नोपमालङ्कारः, किन्तु प्रतिषेधाक्षिप्तप्रसक्तितया भ्रान्तिमान्, तदुपपादकतयोपमा चेत्युभयं व्यङ्ग्यम्। तथापि भ्रान्तिमदादिकमपि साधर्म्यमूलत्वमात्रेणोपमामध्ये परिगणयता दण्डिना तत्त्वाख्यानोपमेत्येतादृशव्यवहारः कृतः परमिति न तत्राप्यव्याप्तिर्दोष इति दिक्।**

## सुधा

तासामुपमानामलङ्कारता नास्तीति तस्मिन् लक्षणस्याव्यापनं दोषो नास्तीति। 'न पद्मम्' इत्यादावुपमा नास्ति, किन्तु प्रतिषेधेन निषेधेन उन्नीता या प्रसक्तिस्तद्भावेन भ्रान्तिमदलङ्कारः। भ्रान्तेरुपपादकतयोपमा चेत्युभयं व्यङ्ग्यमेव। भ्रान्तिमदादिकमपि साधर्म्यमूलतामात्रेणोपमामध्ये परिगणयता दण्डिना तत्त्वाख्यानोपमेति केवलं व्यवहारः कृत इति। तत्रापि "त्वदाननम्" इत्यादावपि नाव्याप्तिर्दोष इति दिक्।

भट्टाचार्यास्तु—"साधर्म्यनिष्पत्तिरूपाया उपमितिक्रियाया अनन्वये सत्त्वादति व्याप्तिः। भेदगर्भिततत्प्रतीतौ भेदनिवेशेन तद्वारणं किंमूलम्? भेदगर्भितोपमितिक्रियाज्ञानादेव विजातीयोपमितिक्रियानिष्पत्तिर्मूलमिति चेत्! 'गोसदृशो गवयः' इत्यादावतिव्याप्तिः। विलक्षणसाधर्म्यज्ञानादिति चेत्? अनन्वयेऽप्यस्तु। न चानन्वये निरुपमत्वप्रतीतेर्विलक्षणसाधर्म्यज्ञानाभावान्नातिव्याप्तिरिति वाच्यम्; स्वेतरसाधर्म्यविरहरूपस्य निरुपमत्वस्य स्वसाधर्म्यस्य च युगपत् प्रतीतौ विरोधाभावात्। न च तयोः युगपत् प्रतीतिसम्भवेऽप्याद्यस्यैव चमत्कारजनकत्वं नान्यस्येति वाच्यम्; उपमितिक्रियावैजात्ये प्रमाणाभावात्, तद्वैजात्यप्रयोजकाद्रमवैजात्यस्यैवोचितत्वात्। रूपकादौ क्रियावैजात्यस्यालङ्कारत्वप्रयोजकाभावात्" इत्याहुः।

रसगङ्गाधरकृतस्तु—'विलक्षणशब्दात्मकस्य विलक्षणज्ञानात्मकस्य वा वर्णनस्य शब्दवाच्यत्वाभावेनार्थालङ्कारत्वस्य बाधात्। वर्णनस्य वाच्यायां व्यङ्ग्यायाञ्चोपमायामन्यङ्ग्यतया तद्विशेषणवैयर्थ्याच्च।

अथ यदि "वर्णनविषयीभूतमुपमितिक्रियानिष्पत्तिमत्सादृश्यमुपमा" इत्युच्यते, तदा 'यथा गौस्तथा गवयः' इत्यत्रातिव्याप्तिः। नापि····[च] चमत्कारिविषयककविव्यापारस्यैव वर्णनत्वेनोपमितिक्रियानिष्पत्तावपि विषयस्याचमत्कारित्वेन सादृश्यवर्णनाभावान्नातिव्याप्तिरिति वाच्यम्; चमत्कारित्वस्य निवेशे उपमितिक्रियानिष्पत्तिविशेषणस्य व्यर्थत्वापत्तेः। अनिष्पन्नेनापाततः प्रतीयमानसादृश्येन चमत्काराऽनाधायकत्वात्। एवं द्वितीयलक्षणेऽपि स्वनिषेधापर्यवसायित्वस्य व्यर्थत्वम्, व्यति-

राजधानी बनी। बलि अथवा बल के नगर बाबल मे ही दैत्य बल का मन्दिर था। असुर-प्रदेश मे बडे २ नगर बहुत थे।[1]

बैबिलन के निचले प्रदेश के लोग काल्डियन कहाते थे।[2]

## १—असुर अथवा दैत्य संस्कृत-भाषी

असुरो की भाषा के विषय मे हैरोडोटस एक सुन्दर उदाहरण उपस्थित करता है—

**Mylitta (मि–लित्त) is the name by which the Assyrians know this goddess, whom the Arabians call Alitta, and the Persians Mitra**[3]

मि लित्त के लित्त मे आद्यन्त विपर्यय हुआ है। तथा रलयोरभेद है। यह ठीक सस्कृत मित्र का अपभ्रंश है। वैदिक ग्रन्थो मे 'मित्रावरुणौ' बहुधा समास मे इकट्ठे भी होते हैं। अत. निश्चय ही अति प्राचीन असुर-देशवासी वैदिक देवो से परिचित थे।

हैरोडोटस ने मैसोपोटेमिया के अनेक मन्दिरों का वर्णन किया है, जहा विरोचन और बलि की पूजा होती थी।

**भारत के पूर्व में असुर**—असुरों का एक भाग कभी भारत के पूर्व मे भी वसता था। शतपथ में लिखा है—

**अथ या आसुर्यः प्राच्या. [प्रजा] त्वद्ये त्वत् परिमण्डलानि [ताः श्मशानानि कुर्वते]।१३।८।१।५॥**

**अथ या आसुर्यः प्राच्याः [प्रजा] त्वद्ये त्वदन्तर्हितानि [ताः श्मशानानि कुर्वते] ते चम्वां त्वद्यस्मिस्त्वत्।१३।८।२।१॥**

अर्थात्—जो असुरो की प्राची दिशा में रहने वाली प्रजा हैं वे गोल श्मशान बनाती हैं।

तथा जो असुरों की प्राची दिशा में रहने वाली प्रजा हैं वे अन्तर्हित श्मशान बनाती हैं। वे चम्वा[4] अर्थात् नीचे गहरा गोल गर्त खोदती हैं।

---

१ हैरोडोटस भाग २ पृष्ठ ६०।

२ तथैव, भाग २ पृष्ठ १४६।

३ तथैव, भाग १ पृष्ठ ६६, तथा देखो भाग १ पृष्ठ १०२।

४ हैदराबाद (दक्षिण) राज्य की भाषा मे गहरे गोल बडे कटोरे

**सा चेयमुपमा द्विविधा—पूर्णा लुप्ता च ।**

**उपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामुपादाने पूर्णा । तेषामेकस्य द्वयोस्त्रयाणां वा लोपे सति लुप्ता ।**

**सुधा**

यदपि, उपमानोपमेयसादृश्योपमास्वरूपादतिरिक्तवाक्यार्थस्याभावेनालङ्करणाश्रयत्वाभावात् 'स्तनाभोगे' इत्यादेरनलङ्कारभूतोपमात्वम्, इति, तदपि न, वाक्यार्थस्यैवालङ्कार्यत्वे प्रमाणाभावात्, सादृश्येन मुखादेरुत्कर्षसम्पादनाच्च, रसाङ्गभूतविभावादेरुत्कर्षाधायकत्वेनालङ्काराणां तदुत्कर्षाधायकताया नियमितत्वेन मुखादिरूपविभावादेरुत्कर्षाधायकत्वेन परम्परासम्बन्धेन रसोत्कर्षाधायकत्वसत्त्वाच्च । अङ्गोत्कर्षेण अङ्गिन उत्कर्षस्य सर्वसम्मतत्वाच्च ।

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥

इत्यादिना प्रामाणिकैस्तथैवाङ्गीकाराच्च । अन्यथा बहूपमोदाहरणानामनुपपत्तेः ।

उपमितिक्रियानिष्पत्तिमद्वर्णनस्योत्प्रेक्षादौ सत्त्वेन तद्वारणाय सादृश्यपदस्यावश्यकत्वेन तन्निरर्थकताया अपि वक्तुमयोग्यत्वात् । तस्मान्मूलोक्तं लक्षणं सम्यगेवेति दिक् ।

उपमां विभजते—**सा चेति** । द्विविधेति सामान्यत इत्यर्थः । दिश[विशे]षतो वक्ष्यमाणत्वादिति भावः । द्वयोर्लक्षणमाह—**उपमानेत्यादि** । उपमानादीनां चतुर्णामुपादाने पूर्णेत्यर्थः । तेषामुपमादीनामेकस्य द्वयोस्त्रयाणां वा लोपे प्रतिपादकशब्दाभावे लुप्तेत्यर्थः । पूर्णोपमात्वञ्च विशेषत[उपात्त]शब्दशक्तिप्रतिपादितोपमानोपमेयकत्वे सति, विशेषतः शब्दोपात्तसमानधर्मकत्वे च सति, विशेषतः स्वनिरूढशब्दगम्यत्वम् । स्वपदमुपमापरम् । उपमानलुप्तायां लक्षणयोपमानप्रतिपत्तिसत्त्वे तद्वारणाय शक्तीति । स्मरवधूयन्तीत्यादावुपमेयलुप्तायामुपमेयस्यात्मनोऽध्याहृतेनात्मानमितिपदेन बोधादतिव्याप्तिवारणाय **उपात्तेति** विशेषणम् ।

एवमपि तन्वीत्यनेनात्रोपमेयस्य काव्यस्य सदृशं न दृश्यत इत्येवंविधलुप्तोपमानायामुपमानस्य च सदृशपदोपात्तत्वादतिव्याप्तिस्तद्वारणाय **विशेषत** इति । उपमेयोपमानतावच्छेदकरूपेणेत्यर्थः । धर्मलुप्तायामप्युपमावाचकपदेन सामान्यतो धर्मस्योपात्तत्वाद्विशेषत इति । उपमाप्रयोजकतावच्छेदकरूपेणेति तदर्थः । वाचकलुप्तायामपि लक्षणयोपमानादिपदेन तदवगमादतिव्याप्तिस्तद्वारणाय विशेषतः **स्वनिरूढेति** । तथा च उपमेयोपमानतावच्छेदकरूपोपात्तशब्दशक्तिप्रतिपादितो-

and the Belus of profane history, and that a considerable portion of the events, properly belonging to the life of his father Nimrod also called both Cush and Belus are engrafted on his sons.[1]

अर्थात्—अत्यधिक सम्भव है कि भारतीय बलि बाईबिल का बल है।

जब राथ, मैक्समूलर आदि ने देखा कि पुरातन भारतीय इतिहास के सत्य सिद्ध होने पर उन का पक्षपात पूर्ण पक्ष खण्डित हो जाएगा, तो उन्होंने इन समानताओं का उल्लेख करना भी छोड दिया। इन मतान्ध लोगों के सिर पर भूत सवार था कि वेद का काल अति प्राचीन सिद्ध न होने पाए।

**परिणाम**—पूर्वोक्त सन्दर्भों से निश्चित होता है कि इस्लामी और यहूदी ग्रन्थ तथा हेरोडोटस आदि प्राचीन ऐतिहासिक विरोचन आदि को ऐतिहासिक पुरुष और ससार के प्रथम शासक मानते थे। उन की राजधानी काल्डिया आदि मे थी।

## असुर अथवा काल्डिया के सम्राट् और निवासी सस्कृत भाषी

इस विषय मे ब्राह्मण आदि ग्रन्थो के निम्नलिखित पाठ सूक्ष्मेक्षिका के योग्य है—

**१ तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्त. परा बभूवु।**
**शत० ३।२।१।२३॥**

**२ तेऽसुरा हेलयो हेलय इति कुर्वन्त परा बभूवु.। महाभाष्य पस्पशाह्निक मे उद्धृत ब्राह्मण पाठ।**

**३ असुरेषु वा एष यज्ञ अग्र आसीत्। शत० १२।९।३।७॥**

**४ तै पुनरसुरैर्यज्ञे कर्मण्यपभाषितम् । महाभाष्य पस्पशा०**

इन वचनो से स्पष्ट है कि—

१ असुर आत्तवचा अर्थात् शुद्ध वाक् से परे हटे अथवा ग्रस्त उच्चारण वाले अपभाषण के कारण पराजित हुए।

२ असुर लोग यज्ञ करते थे।

यज्ञ मे दैवी वाक् बोली जाती है। निश्चय ही उन के पास वैदिक छन्द अर्थात् मन्त्र थे। तै० स० मे स्पष्ट ही लिखा है—

---

1 History of Hindoostan, vol II p 18

## सुधा

तथा च चन्द्रनिरूपितसादृश्यप्रकारकज्ञानविषयाभिन्नं मुखमिति धीः।

तत्रैव रमणीयतयेति महो....[पदो] पादाने प्रयोज्यत्वं तृतीयार्थः, तस्य धात्वर्थे इवार्थे सादृश्येऽन्वयः। भाने तस्य च, तेन रमणीयताप्रयोज्यचन्द्रनिरूपितसादृश्यप्रकारक-भानविषयं....[यः] मुखमिति बोधः। चन्द्रवद्रमणीयमित्यत्र "तेन तुल्यम्" [५,१, ११५] इति विहितस्य वतेः सादृश्यवदर्थकस्य सादृश्ये लक्षणा, तस्य रमणीयपदार्थैक-देशे रमणीयत्वेऽन्वयः। चन्द्र इव रमणीयमित्यत्रेव बोधः। चन्द्रवन्मुखमित्यत्र चन्द्रनिरूपितसादृश्यवदभिन्नं मुखमिति धीः। चन्द्रवद्रमणीयमस्येत्यत्र चन्द्रशब्दस्य चन्द्ररमणीयत्वे लाक्षणिकतया चन्द्ररमणीयतानिरूपितसादृश्याधिकरणमेतत् सम्बन्धि रमणीयत्वम्। चन्द्रेण तुल्यमित्यत्र निरूपितत्वं तृतीयार्थः, तस्य सादृश्येऽ-न्वयः, चन्द्रनिरूपितसादृश्याभिन्नमिति धीः। रमणीयतयेति धर्मनिर्देशे प्रयोज्यत्वं तृतीयार्थः। तेन चन्द्रनिरूपितरमणीयत्वप्रयोज्यसादृश्यादभिन्नमिति बोधः। सादृश्यस्य समानधर्मत्वे तु चन्द्ररमणीयं मुखमित्यत्र चन्द्रवृत्तिसमानधर्मप्रतीतिर्लक्षणया, तस्य चाभेदेन रमणीयत्वेऽन्वयः। चन्द्रवृत्तिसमानधर्माभिन्नरमणीय[त्व]वन्मुख-मिति धीः। चन्द्र इव रमणीयमित्यत्र चन्द्रपदार्थस्य आधेयतासम्बन्धेन इवपदार्थे समानधर्मेऽन्वयः। चन्द्राधेयसमानधर्माभिन्नं रमणीयमिति धीः। रमणीयत्वेन चन्द्रेण सममित्यत्र रमणीयत्वोत्तरतृतीयाया अभेदार्थक....[त्व]म्। धान्येन धनीतिवत् चन्द्रोत्तरतृतीयायाः निरूपितत्वमर्थः। रमणीयत्वाभिन्नं चन्द्रनिरूपितं यत्सादृश्यं तद्वदभिन्नमिति बोधः। शेषं श्रौत्यार्थीविभागे वक्ष्यामः।

तत्रेवादीनां द्योतकत्वमेव न वाचकत्वं निपातत्वादुपसर्गवत्। न च तेषामपि वाचकत्वमस्त्विति वाच्यम्; उपास्यते गुरुः, अनुभूयते सुखमित्यादौ गुर्वादेर्लकारेणा-भिधानानुपपत्तेः। उपसर्गवाच्योपासनस्य धात्वर्थताविरहेण तज्जन्यफलशालित्वा-भावाद्। एवं साक्षात् क्रियते गुरुरित्यादौ, गुर्वादेरभिधानार्थं द्योतकताया एव युक्तत्वात्। अन्यथा "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव" इत्यादावुस्रादिपदोत्तरं तृतीयादेरसङ्गतित्वापत्तिः। उस्रादेरुद्धरणक्रियां प्रत्यकरणत्वात्, इवार्थसादृश्या-न्वयित्वेन करणीभूतशरविशेषणत्वाभावाच्च। द्योतकत्वे तूस्रादिपदस्योस्रसदृशपरतया-स्रसदृशैः...[दृशैः]शरैरिति विशेषणत्वसम्भवेन तृतीयादिसङ्गतिः। द्योतकत्वञ्च स्वसमभिव्याहृतपदान्तरेण शक्त्या लक्षणया वा तादृशार्थबोधने तात्पर्यग्राहकत्वेनो-पयोगित्वमिति वैयाकरणाः।

नैयायिकास्तूपसर्गाणां द्योतकत्वेऽपीवादीनां वाचकत्वे बाधकाभावः। निपात-त्वादिति हेतुस्तु अप्रयोजकत्वान्न साधकः। अन्यथाऽव्ययत्वादिति हेतुता, अव्ययमात्र-स्यैव द्योतकतापत्तेरिति वदन्तीत्यन्यत्र विस्तरः।

दर्शाई है।[१] तदनन्तर श्री जयनाथपति ने भी इसी विषय पर एक असाधारण लेख लिखा ।[२]

**सुमेर (=मीड) भाषा और महामहोपाध्याय वाडेल**—मिश्र के कालक्रम का उल्लेख करते हुए डकन मैकनाटन लिखता है—

**It will be readily granted that Prof Waddell has done much useful work in collecting examples of script from India which bear a close resemblance to Sumerian script, that it is possible, perhaps probable, that the Sumerians and the early Aryans of North India spoke similar languages and were of related stock,**[३]

अर्थात्—वाडेल का मत—बहुत सम्भव है कि उत्तर भारत के आदि आर्य और सुमेर ( बाबल ) के लोग एक समान भाषाए बोलते थे।

नि.सन्देह यह मत ठीक है। सुमेर की भाषा ही नही, सम्पूर्ण असुर देश की भाषा भी आर्य भाषा सस्कृत का विकृत रूप थी।[४] अनेक पाश्चात्य लेखक काल्डिया के वासियों को अक्कद की महती हैमाई जाति का कह कर उन की भाषा को आर्य भाषा से पृथक् मानते हैं।[५] वस्तुतः यह बात सत्य नहीं। हामी भाषा भी सस्कृत का ही विकृत रूप है।

कालान्तर मे ब्राह्मणो के अदर्शन और फलतः पठन-पाठन का क्रम टूटने से इन असुरो मे वाक् की अस्पष्टता प्रारम्भ हुई। वे म्लेच्छ (=अस्पष्ट-भाषी) बन गए।[६] उन्होने व्यवहार के अतिरिक्त यज्ञ मे भी पाठ-शुद्धि का ध्यान न

---

१ J A O S भाग ४५, पृ० ३३६।

२ इ० हि० क्वा०, भाग ४, पृ० ६८७, सन् १६२८।

3 D Macnaughton, A Scheme of Egy Chro , London, 1832, p 67

४. तुलना करो, मगलदेव, पृष्ठ २११। इतिहास ज्ञान के अभाव के कारण डाक्टर जी तथ्य को समझ नही सके।

५. हैरोडोटस, भाग १, पृष्ठ ६२ पर चौथा टिप्पण।

६ असुर म्लेच्छ बन गए, उन मे दास-प्रथा चल चुकी थी। उसी का उल्लेख करते हुए विष्णुगुप्त लिखता है—"म्लेच्छानामदोष. प्रजा विक्रेतुमाधातु वा, न त्वेमार्यस्य दासभाव.।" अर्थशास्त्र—जालि स० पृष्ठ १०७।

अर्थात्—म्लेच्छों मे प्रजाओं का विक्रय अथवा दास रूप मे रखना अदोष है। आर्यों मे दासभाव नहीं है।

यद्यप्युमामहेश्वरयोर्वागर्थवन्नित्यसम्बन्धित्ववर्णनेन तयोर्निरतिशयपरस्परप्रेमशालित्वं महामहिमत्वमित्यादि व्यज्यते, तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः। न खलु व्यङ्ग्यसंस्पर्शप्रतिभासादेवात्र चारुताप्रतीतिः, किन्तु वाच्यवैचित्र्यप्रतिभासादपीति प्रायस्तत्र सम्भवद्रसादिरूपं व्यङ्ग्यमलङ्कारान्तरं चागणयित्वैव तत्तदलङ्कारा उदाह्रियन्ते।

एकस्यैव धर्मस्य सम्बन्धिभेदेन द्विरुपादानं वस्तुप्रतिवस्तुभावः। स च शुद्धो न सम्भवति, किन्तु विशेषणतया विशेष्यतया वा सर्वत्र बिम्बप्रतिबिम्बभावकरम्बितः।

**वस्तुतो भिन्नयोर्धर्मयोः परस्परसादृश्यादभिन्नतयाध्यवसितयोर्द्विरुपादानं बिम्बप्रतिबिम्बभावः। तत्र वस्तुप्रतिवस्तुभावस्य विशेषणता यथा—**

### सुधा

पृथग्भावो न, इति पद्ये, तत्=नित्यसम्बन्धित्वमित्यर्थः। एवं चात्रपूर्णोपमायां नित्यसम्बन्धत्वरूपो धर्मोऽनुगामितया=एकसम्बन्धरूपतया दर्शित इत्यर्थः। शङ्कते—**यद्यपीति**। तयोः वागर्थवन्नित्यसम्बन्धत्वप्रतिपादनेन निरतिशयमिथःप्रेमशालित्वं महामहिमत्वं व्यङ्ग्यत्व[ त्व ! ]मस्तीति ध्वनित्वं मध्यमकाव्यत्वं वा, तादृशव्यङ्ग्यस्योपमापोषकत्वादिति भावः। समाधत्ते—**नेति**। व्यङ्ग्यसंस्पर्शप्रकाशादेवात्ररमणीयताप्रतीतिर्नास्ति, किन्तु उपमावैचित्र्यप्रकाशादपि। यत्रालङ्कारेण चारुता, तत्र विद्यमानं रसादिरूपं व्यङ्ग्यं प्रतिपाद्यातिरिक्तमलङ्कारञ्चानालोच्यैवालङ्काराणामुदाह्रियमाणत्वमिति। यथा "स्वच्छन्दोच्छलत्" इत्यादौ मन्दाकिनीविषयरति तीर्थान्तरेभ्यो व्यतिरेकञ्चागणयित्वैवानुप्रासमात्रवैचित्र्येण शब्दचित्रता, तद्वदित्याशयः।

वस्तुप्रतिवस्तुभावेन धर्मं दर्शयितुं तल्लक्षणं पूर्वमाह—**एकस्यैवेति**। सम्बन्धिभेदेन=प्रतियोगिभेदेन द्विरुपादानस्य पौनरुक्त्यपरिहारार्थत्वम्। केवलस्य तस्यासत्त्वादाह—**स चेति**। वस्तुप्रतिवस्तुभाव इत्यर्थः, शुद्धो बिम्बप्रतिबिम्बभावादिरहित इत्यर्थः। **किन्त्विति**। विशेषणतया बिम्बप्रतिबिम्बभावविशेषणतया विशेष्यतया तन्निरूपितयैवेत्यर्थः। परमार्थतस्तु बिम्बप्रतिबिम्बभावस्यैव शुद्धत्वधर्मान्तरविशिष्टत्वाभ्यां द्वैविध्यमिति ग्रन्थकाराभिप्रायः। करम्बितः, मिश्रित इत्यर्थः।

बिम्बप्रतिबिम्बभावलक्षणमाह—**वस्तुत इति**। परमार्थतो भिन्नयोः

विरोचन का पुत्र शम्भु और शम्भु का एक पुत्र धनुक=धनु था।[1] धनु के वश मे धान्व हुए। असित उन में से कोई एक था।

देव ही नहीं, गन्धर्व, पितर, असुर और राक्षस[2] जातियां भी सस्कृत और वैदिक कर्मकाण्ड मे गति रखने वाली थीं।

## २. ईरानी संस्कृत भाषी

१—अति प्राचीन ईरानी असुरो के अति निकट सम्बन्धी भृगु की सन्तान मे थे। भृगु ने हिरण्यकशिपु की कन्या दिव्या से विवाह किया। उस मे शुक्र जन्मा। कवि, काव्य और उशना उसी के नामान्तर थे। वह वर्तमान ईरानी ग्रन्थों मे 'कैकोस' (=कवि+उशना)[3] के नाम से स्मृत है।

शुक्र द्वारा सस्कृत मे रचे दण्डनीति-शास्त्र के उद्धरण आज भी अनेक ग्रन्थो में उपलब्ध हैं। सम्पूर्ण भार्गव शिष्ट थे और सस्कृत के अद्वितीय ज्ञाता थ।

**पारस नाम का कारण**—जोव और दने (दनु) का पुत्र पर्सियस् था। वह बल के पुत्र केफियस् के पास गया। उसने केफियस् की पुत्री अन्द्रोमेध्रा से विवाह किया। इन का पुत्र पर्सेस था। उस के नाम पर देश का नाम पारस पडा।[4] इति।

२—ईरान का प्राचीनतम राजा 'वैवस्वत यम' था। वह वैवस्वत मनु का लघु भ्राता था। वह ईरानी वाङ्मय मे 'यिम क्षिश्रोस्त' आदि नामो से स्मृत है। अवेस्ता मे यह नाम **'यिम खशएत'** है। वह **'विवध्वन्त'** का पुत्र **'पिशदादियन'** कुल का राजा था।

इन मे 'यिम' **यम** का, 'विवध्वन्त' **विवस्वान् (=विवस्वन्त)** का और 'पिशदादियन' **पश्चाद्-देव** का अपभ्रंश हैं।[5]

---

१ वायुपुराण ६८।८१॥

२ शतपथ १०।५।२।२० तथा शतपथ १३।४।३।१० की तुलना करने से विदित होता है कि राक्षस देवा के वशों मे से है।

३ कभी कभी दो पर्याय नामो से भी अपभ्रंश हो कर एक नाम बन जाता है। यथा—'कच्छप कूर्म, इन दो नामो से पजाबी भाषा का 'कच्छुकुम्मा' शब्द बना है।

४ हेरोडोटस, द्वितीय भाग, पृष्ठ १४५।

५ तुलना करो—हॉग, ऐतरेय ब्राह्मण, भूमिका, पृ० ३०। तदनुसार पिशदादियन पुरोधा का फारसी अपभ्रंश है। परन्तु हमारी तुलना ठीक है।

**शुद्धबिम्बप्रतिबिम्बभावो यथा—'पाण्ड्योऽयमंसार्पितलम्बहारः' इत्यादि। अत्र हरिचन्दनबालातपौ हारनिर्झरौ च बिम्बप्रतिबिम्बभावेन निर्दिष्टौ। श्लेषो यथा—**

नरसिंह महीपाल समस्तोऽपि रिपुस्तव।
पारावारसमानत्वं दधाति स्वपदच्युतः॥

सुधा

न च सौन्दर्यादिनैवात्रोपमानसिद्धया न तस्य धर्मतेति वाच्यम्; 'कान्त्या मुहुः' इत्यादावपि तदभावापत्तेः। एवञ्च—

मुक्ताभिः सलिलरयास्तशुक्तिपेशीमुक्ताभिः कृतरुचिसैकतं नदीनाम्।
स्त्रीलोकः परिकलयाञ्चकार तुल्यं पल्यङ्कैर्विगलितहारचारुभिः स्वैः॥

इत्यत्र मुक्तारुचिरत्वहारचारुत्वधर्मयोरपि भेदाभावाच्छुद्ध एव वस्तुप्रतिवस्तुभाव इति वदन्ति।

शुद्धबिम्बप्रतिबिम्बभावं दर्शयति—**पाण्ड्योऽयमित्यादि**। पूर्वं व्याख्यातम्।

अत्र तत्प्रकारं दर्शयति—हरिचन्दनबालातपयोर्हारनिर्झरयोश्च बिम्बप्रतिबिम्बभावो दर्शित इति। यथा वा—

उअणिच्चलणिप्पदा भिसणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व॥

अत्र बिषिणी[बिसिनी]पत्रमरकतभाजनयोरेव[क]त्वेनाध्यवसानम्। **रसगङ्गाधरकृतस्तु** [1]'अर्थगम्योऽप्ययं दृश्यते। "मलय इव जग[भा]ति पाण्डुर्वल्मीक इव-[वा]धिधरणि धृतराष्ट्रः" इत्यत्र चन्दनानां पाण्डवानां सर्पाणां दुर्योधनादीनां बिम्बप्रतिबिम्बभावस्य स्पष्टमुपलब्धेः। शब्दोपात्तस्य स[!] तत्र[न्त्र]त्वे प्रमाणाभावात्। तस्माद्द्वैविध्यमेव तस्योचितम्। प्रतिबिम्बमात्रस्योपादाने उपमाने धर्महानिदोषः [तत्र तत्स्थानीयधर्मानुक्तेः] बिम्बमात्रस्यैवोपादाने धर्माधिक्यापत्तिः। तस्मात्तदापन्नयोः द्वयोरेव शाब्दत्वं द्वयोरेव वाच्या[वा]र्थत्वम्। न त्वेकस्य शाब्दत्वम्, अन्यस्यार्थत्वमिति एव[!] तत्त्वमिति वदन्ति[2]।

श्लेषेण तत्र धर्ममाह—**नरसिंहेति**। नरसिंहेत्याद्युभयं सम्बोधनम्। सम-

---

1. बिम्बप्रतिबिम्बभाव इत्यर्थः। वस्तुतो भिन्नयोरपि पदार्थयोस्तद्गतधर्माणामभिन्नतया ऐक्यप्रतिभासो बिम्बप्रतिबिम्बभावः। वस्तुतोऽभिन्नयोरप्याधारस्य भिन्नभिन्नशब्दप्रतिपाद्यत्वरूपभेदाच्च भिन्नत्वेन प्रतीतयोः पदार्थयोरैक्यप्रतीतिर्वस्तुप्रतिवस्तुभावः।
2. 'तस्योचितम्' इत्येतत्पर्यन्तं रसगङ्गाधरकृतो ग्रन्थः, ततस्तस्याभिप्रायवर्णनपरोऽन्यदीयो ग्रन्थः।

श्यप+दनू=दनु




वायु पुराण ६८।३ में विप्रचित्ति आदि के लिए अयज्वा और अब्रह्मण्य विशेषण लिखे हैं। मत्स्य मे ६।१६ से इस वश का उल्लेख है। तदनुसार अन्य प्रसिद्ध पुत्र, द्विमूर्धा, शकुनि, शङ्कु, अयोमुख, शम्बर, कपिश, केतु आदि थे।

**योरोप की गॉथ जाति**—गवेष्ठि को वायु पुराण ६८।१६ में मनुष्य-धर्मा कहा है। गवेष्ठि के वशज ही आगे चलकर 'गाथ' कहाए। गाथिक भाषाए इन्हीं की हैं। पुराने गाथ इस्तर='डेन्यूब' नदी के उत्तरी तट पर बसे हुए थे। निश्चय ही वर्तमान 'डेन्यूब' 'दानव' नदी है। इसी प्रकार डेन लोग भी दानवो के वशज हैं।

पुलोम के वशज पौलोमो का वर्णन शाखायन आरण्यक के पूर्व उद्धृत प्रमाण मे आया है। पुलोम की कन्या शची इन्द्र की पत्नी थी। जैमिनि ब्राह्मण ३।१९९ मे इस का उल्लेख है। शची पौलोमी ऋ० १०।१५९ की द्रष्ट्री है।

वृषपर्वा की दुहिता शर्मिष्ठा महाराज ययाति की पत्नी थी। उशना की कन्या देवयानी और वृषपर्वा की दुहिता शर्मिष्ठा के सवाद-विषय मे एक गाथा महाभारत सभापर्व २।२६ मे उद्धृत है। महाभारत आदिपर्व ७३।१०, ३२ तथा ७५।७१ मे शर्मिष्ठा का उल्लेख है। बौधायन धर्मसूत्र मे भी वार्षपर्वणी का उल्लेख मिलता है।

**आर्यों, देवो और असुरो के विवाह सम्बन्ध**—अति प्राचीन काल मे इन जातियो में परस्पर विवाह सम्बन्ध होते रहते थे—

१. जैमिनीय ब्राह्मण ३।७२ में लिखा है—

**कण्वो वै नार्षदोऽखगस्यासुरस्य दुहितरमविन्दत।**

अर्थात्—नृषद् के पुत्र कण्व ने, [जो मानवो में था] असुर अखग की दुहिता से विवाह किया।

**मिश्रणेष्वनुगामित्वविम्वप्रतिविम्बभावयोर्मिश्रणं यथा—**

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥

**अत्राधृष्यत्वमभिगम्यत्वं च नृपगुणानां यादोरत्नानां च विम्ब-प्रतिविम्बभावमपेक्ष्य लब्धात्मकं साधारणो धर्मः । अनुगामित्वश्लेष-योर्मिश्रणं यथा—**

गते तव भ्रातरि वत्स पञ्चतां चिराय नश्चान्द्रमसं कुलं महत् ।
अदृष्टसन्तानतया न शोभते वनं हरेः प्राङ्मथनादिवोदधेः ॥

**अत्र सन्तानशब्दश्लेषमपेक्ष्य लब्धात्मकं शोभारहितत्वं साधारणो धर्मः ।**

**अनुगामित्वोपचारयोर्मिश्रणं यथा—**

## सुधा

मिश्रणभेदेषु द्वयोर्मिश्रणं प्रदर्शयन् अनुगामित्वबिम्बप्रतिबिम्बभावयोर्मिश्रणेन धर्ममुपदिशति—**यथेति** । भीमैः कान्तैश्च नृपगुणैः राजगुणैः तेजःप्रतापादिभिः कुलशीलदाक्षिण्यादिभिश्च स दिलीपः, उपजीविनाम् आश्रितानां यादोभिः जलग्राहैः । "यादांसि जलजन्तवः" इत्यमरः । रत्नैश्चार्णव इवाधृष्योऽनभिभवनीयश्चाभि-गम्यश्चाभिश्रयणीयश्च बभूवेत्यन्वयः । अत्र श्लोके नृपगुणानाञ्च यादोरत्नानाञ्च बिम्बप्रतिबिम्बभावापेक्षया लब्धस्वरूपमधृष्यत्वाभिगम्यत्वयोरेकसम्बन्धेनोभयत्र सत्त्वादनुगामित्वरूपः साधारणधर्मो वर्तत इति तत्समन्वयः । अत्र ग्रन्थकृतानुक्तमपि अनुगामित्ववस्तुप्रतिवस्तुभावयोरुदाहरणं यथा—

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीभृतामाद्यः प्रणवश्छन्दसामिव ॥

अत्र मनुप्रणवयोरुपमायां छन्दोमहीभृतां बिम्बप्रतिबिम्बभावापन्नानां विशेष्य-[ पण ]तया आद्यत्वमुक्तं, मनीषिमान्यत्वमनुगतधर्मः । अनुगामित्वश्लेषयोरुदा-हरणं दर्शयति—**गते इति** ।

हे वत्स तव भ्रातरि पञ्चतां नाशभावं गते सति नोऽस्माकं चान्द्रमसं चन्द्रम-[ सम्बन्धि ]वधि महत्कुलम्, अदृष्टसन्तानस्य भावस्तया, उदधेः समुद्रस्य मथनात् पूर्वं हरेरिन्द्रस्य वनं नन्दनमिव न शोभते इत्यन्वयः । अत्र सन्तानशब्दस्या-खण्डश्लेषेण पुत्रत्वपारिजातत्वमपेक्ष्य शोभारहितत्वधर्मस्यैकेन सम्बन्धेनाभिधाना-दनुगामितासत्त्वादुदाहरणसङ्गतिः ।

अनुगामित्वोपचारयोरुदाहरणं दर्शयति—**यथेति** ।

**some time extended so as to include the Dravidian tongues of India, also of the agglutinative type, thus erroneously suggesting affinity between non-Aryan and non-Semetic groups of languages which are probably quite unconnected**

इस लेख के लिखने वाले ने अन्त मे **probably** और **quite** दो सर्वथा विरोधी शब्द लिखकर सारी नौका डुबो दी है। अस्तु। इन्हे ही उत्तर काल मे तुर्क कहने लगे थे।

तुर्की भाषा के चाकू[1], कैंची[1], आदि शब्द आज भी इस के सस्कृत से सम्बन्ध का परिचय देते हैं। तुर्की भाषा भी इस बात का अच्छा उदाहरण है कि सहस्रो वर्षो के अनन्तर भाषा कहां से कहा पहुच जाती है।

कभी गन्धार और ईरान का एक भाग एक शासन के अधीन थे। ईरान के राजाओ म **Darius** नाम अनेक राजाओ ने धारण किया है। भारत युद्ध से कुछ पूर्व गन्धार का एक राजा नग्नजित् था। इस का अपर नाम दारुवाही था। दारुवाह नाम का अवशेष ही **Darius** नाम मे रह गया।[2] यह दारुवाही आयुर्वेद की एक सहिता का रचयिता था। वह ग्रन्थ उत्कृष्ट सस्कृत मे है। उस समय ईरान मे सस्कृत बोलने और समझने वाले विद्यमान थे। फारसी भाषा सस्कृत का ही अपभ्रष्ट रूप है।

**ईरान की सात भाषाएं**—पुराने ईरान मे दस विभिन्न जातियों[3] और सात भाषाओ के भेद हो चुके थे। सय्यद हुसैन शाह के फारसी व्याकरण (तुहक तुल-अजम) के आधार पर मार्टिन हाग इन के निम्नलिखित नाम देता है। चार मृत भाषाए, यथा—सुग्धी, जाउली, सकजी (शक) और हिरिवि। और तीन प्रचलित भाषाए—पारसी, दारी और पह्लव देश की भाषा।[4]

इन मे से शक भाषा निश्चित ही सस्कृत का विकार मात्र थी। शक कभी आर्य थे और उत्तरकाल मे शूद्र बने। इन के साथी पह्लव भी आर्य थे। यह सन्देह से परे है।

---

१ मगलदेव, पृष्ठ २१८।

२, भारतवर्ष का बृहद् इतिहास, भाग १, पृष्ठ २९६।

३ हेरोडोटस, भाग १, पृष्ठ ६६।

4 Essays on the Sacred Language, Writings and Religion of the Prsis, Revised by E W West 4th ed, London 1907, p 66, note 2

चिह्नप्रसादयोर्विम्बप्रतिविम्बभावश्च ।

श्लेषविम्बप्रतिविम्बभावयोर्मिश्रणं यथा—

पार्थनाशमुदिता नृपात्मजा वाष्पमूहुरविनीतमन्यवः ।
आतपक्वथितपाथसो बहिः शीतगर्भसलिला इव ह्रदाः ॥

अत्र वाष्पशब्दे श्लेषस्य नृपात्मजह्रदविशेषणानां विम्बप्रतिविम्बभावमपेक्ष्य चारुता ।

उपचारविम्बप्रतिविम्बभावयोर्मिश्रणं यथा—

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥

अत्राश्वासितेन्द्रसिक्तेत्यनयोर्वरोरगाणां च विम्बप्रतिविम्बभावमपेक्ष्योद्गमनमुपमानोपमेयोर्द्वयोरप्युपचरितम् । मुख्यार्थस्य द्वयोरप्यसम्भवात्, मुख्यार्थे तस्या ग्राम्यत्वाच्च । यदाहुः—

सुधा

अत्रोदाहरणे विम्बप्रतिबिम्बभावप्राप्तयोः क्रोधनक्रयोः संवृतगूढशब्दाभ्यां भिन्नाभ्यामेकस्यैव धर्मस्योपात्तत्वेन वस्तुप्रतिवस्तुभावस्य सन्तोषचिह्नप्रसादयोर्बिम्ब प्रतिबिम्बभावेन सह सत्त्वाल्लक्षणसङ्गतिः ।

श्लेषबिम्बप्रतिबिम्बभावयोर्मिश्रणोदाहरणं दर्शयति—**यथेति** । **पार्थेति** । पार्थनाशेन मुदिता हृष्टा अनितान्त[ अविनीत ]मन्यवो नृपात्मजा राजसुता बहिरातपेन क्वथितानि पाथांसि जलानि येषाम् "कबन्धमुदकं पाथः" इत्यमरः, शीतानि गर्भे सलिलानि येषां ते तादृशा ह्रदा इव वाष्पं जलमश्रुपातञ्च ऊहुरित्यन्वयः । अत्रोदाहरणे बाष्पशब्दे श्लेषो नृपात्मजह्रदविशेषाणां बिम्बप्रतिबिम्बभावापेक्षया चारुतातिशयं पुष्णातीति लक्षणसङ्गतिः ।

द्वयोर्मिश्रणे बिम्बप्रतिबिम्बभावोपचारयोरुदाहरणं दर्शयति—**उपचारेत्यादि** । **सा किलेति** । रघुकाव्ये कैकेयीवाक्यवर्णनं **सेति** । चण्डी अतिकोपना । "चण्डस्त्वत्यन्तकोपनः" इत्यमरः । सा भर्त्रा दशरथेन आश्वासिता अनुनीता, तेन भर्त्रा संश्रुतौ प्रतिज्ञातौ वरौ, इन्द्रेण सिक्ता अभिवृष्टा भूर्बिले मग्नौ वल्मीकादौ मग्नौ उरगाविव उद्ववाम उज्जगार । बिम्बप्रतिबिम्बभावोपचारौ स्पष्टयति—अत्रोदाहरणे आश्वासितेन्द्रसिक्त[क्तेत्य]शा नयोः वरोरगाणाञ्च बिम्बप्रतिबिम्बभाव उद्गमनस्य उपमानोपमेययोः द्वयोरेवोपचार उद्गमनरूपमुख्यार्थस्योभयत्रासम्भवात्, मुख्यार्थे तस्य ग्राम्यत्वाच्च । यदि चोपमेये मुख्यार्थादरः, तदा तत्र ग्राम्यदोषप्रसक्तिः ।

तत्र प्राचीनसम्मतिमाह—**यदाहुरिति** । निष्ठ्यूतादिकं गौणवृत्तिव्यपाश्रयं

**अथ ह वै पणयो नामासुरा देवाना गोरक्षा आसु. ।**

अर्थात्—पणि नाम के असुर [प्राचीन काल मे] देवो की गौओ के रक्षक थे ।

**देवपूजक पणि**—पणि लोग विष्णु के पूजक बन गए। उन्हो ने अपने नगरो मे विष्णु (**Hercules**) के मन्दिर बनवाए। हैरोडोटस ने फिनिशिया के ताइरे (**Tyre**) नगर मे विष्णु (हरक्यूलीज) का एक मन्दिर प्रत्यक्ष देखा था। वह उस के काल से तेईस सौ (२३००) वर्ष पहले अर्थात् विक्रम से २७०० वर्ष पूर्व बना था।[1] पणि वणिक् वृत्ति=व्यापारी थे। वे जहा कहीं जाते थे, विष्णु का मन्दिर बना देते थे।

**पणियो का निवास स्थान**—पणि पहले इरिथ्रियन समुद्र (हैरोडोटस का भारत सागर और फारस की खाडी) के तटो पर वास करते थे ।

पद्मनाभैया के अनुसार फारस की खाडी पर कुजिस्तान ही पुराना ऐलम है। ऐलम पणियो का स्थान था। ऐलम की राजधानो 'सुसा' थी।

मत्स्य पुराण मे आश्चर्यरूप से यह तथ्य सुरक्षित रहा है। यथा—

**सुषा नाम पुरी रम्या वरुणस्यापि धीमता ।**

निश्चय ही पणियो का कोई भाग वरुण के राज्य म रहता था और सस्कृत से पूर्ण परिचित था।

**यूनान के लिपि-प्रदाता**—पणियो का एक समूह जो चन्द्रमा (**Cadmus**) के साथ यूनान के आस पास व्यापार करता था, वही बस गया था।[2] उस समूह के विद्वानो ने यूनानियों को लिपि का ज्ञान कराया। उस लिपि मे प्रायः वे ही ध्वनिया हैं जो सस्कृत लिपि मे पाई जाती हैं । वर्णो का ध्वनि-साम्य कभी अति पुरा काल मे भाषा की समानता का परिचायक है। विष्णु की पूजा भी पणिया मे प्रचलित थी। अत निश्चित है कि अति प्राचीन काल मे फिनिशियन सस्कृत-भाषी थे।

## ४. सुर देश (Syria) की भाषा संस्कृत

**नाम**—जिन लोगो को ग्रीक लोग 'सीरियन' कहते है, उन्हे ही बर्बर

---

1 I made a voyage to Tyre in Phoenicia hearing there was a temple of Hercules at that place, very highly venerated I visited the temple, and found it Herodotus Vol 1 p 136

२ हैरोडोटस, भाग २, पृष्ठ २५।

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्तु ( त्र ) ग्राम्यकक्षां विगाहते ॥ इति ।

**एवमन्यत्रापि द्वयोर्मिश्रणमूह्यम् ।**

**अनुगामित्वबिम्बप्रतिबिम्बभावसमासभेदाश्रयणानां मिश्रणं यथा—**

नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।
महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥

**अत्र व्यत्यगादित्यनुगामिधर्मः । अन्यवधूर्भवित्रीसागरगामिन्यो-र्नयोर्बिम्बप्रतिबिम्बभावः । आवर्तमनोज्ञनाभिरित्यत्र समासभेदाश्रयणमित्येतेषां मिश्रणम् ।**

**सुधा**

कोमला दन्ता यस्याः, मत्तबर्हिकुलमित्येव [ इव ] केशकलापो यस्या इति समासभेदः ।

जीवयत्यत्रोपचारः, मुख्यजीवनस्य आत्मविशेषगुणजनकमनस्संयोगरूपस्य तत्राभावात् । समासभेदवस्तुप्रतिवस्तुभावयोरपि तेषामेव—"घनप्रसव-सङ्कुलास्थगितशर्वरीवल्लभा विराजति बलाहकागमनकालिकी द्यौरियम् । परं विहितगोचरीभवनपुण्डरीकलल [ च्छ ] टा तमालदलमेचकावयवसन्निवेशेव भूः ॥" [ पृ० ४१ ] अत्र घनानां मेघानां प्रसव उत्पत्तिः । पक्षे, घनप्रसवो जलम्, तेन सङ्कुला विहितम् [ अ ] निषिद्धम्, गोचरीभवनं यस्यास्तादृशी पुण्डरीक-च्छटा यस्येति । [ स्या इ ], अदृश्यपुण्डरीकेत्यर्थः । तमालदलवत् श्यामाः तमालदलैः श्यामा; इति समासभेदः । बिम्बप्रतिबिम्बभावापन्नतत् [ चन्द्र ]-पुण्डरीकयोः स्थगितत्वस्य विहितगोचरीभवनत्वस्यैकस्यैव धर्मस्य विशेषणतया निर्दिष्टत्वाद्वस्तुप्रतिवस्तुभावः ।

**श्लेषोपचारयोर्यथा—**

अस्थानगामिभिरलङ्करणैरुपेता भूयः पदस्खलननिह्नुतिरप्रसन्ना ।
वाणीव कापि कुकवेर्मधुपानमत्ता गेहान्निपातबहुलेव विनिर्जगाम ॥

निर्गमनस्य वाण्यामुपचारः । **अन्यत्रापीति** । अन्यदपीत्यस्यार्थः । बहूनां मिश्रणेऽनुगामित्वबिम्बप्रतिबिम्बभावसमासभेदानां मिश्रणमुदाहरति—**यथेति** । आवर्तवद् जलभ्रम इव मनोज्ञा नाभिर्यस्याः, "स्यादावर्ती [र्तोऽम् ] भसां भ्रमः" [का० १, ९५] इत्यमरः । इदञ्च नदीसाम्यार्थमुक्तम् । अन्यवधूः अन्यस्य पत्नी भवित्री सा कुमारी तं नृपं सागरगामिनी समुद्रगामिनी स्रोतोवहा नदी मार्गवशादुपेतं प्राप्तं महीधरं पर्वतमिव व्यत्यगाद् व्यतीत्य गता । अत्रोदाहरणे व्यतीयायेति

व्याख्यान भारतीय इतिहास से ही सम्भव हुआ है । इस का श्रेय इन पक्तियो के लेखक को ही है । मिश्र के लोग चिरकाल तक देवो के उपासक रहे। वे देवी वाक् को जानते थे ।[1] उन के सृष्टि उत्पत्ति के वर्णन मे वेदमन्त्रो और ब्राह्मण वचनो का अनुवाद विद्यमान है ।[2]

२ हैरोडोटस के काल मे भी मिश्र के पुरोहित यज्ञो के अतिरिक्त मास का प्रयोग नहीं करते थे ।[3] मास बलि की अवहेलना आर्यसभ्यता का प्रधान मन्त्र रहा है । इस से प्रतीत होता है कि अति प्राचीन काल के मिश्र के पुरोहित आर्यभाव-भावित थे ।

ये इतने पुरातन काल की बाते है कि इन का शृङ्खलाबद्ध इतिहास जोडने के लिए ससार के पुराने ग्रन्थो का अधिक विवेचन करना पडेगा ।

मिश्र मे दो लिपिया चलती रही है । एक पवित्र लिपि, जिसे वे देव-लिपि कहते थे, दूसरी साधारण लिपि । इस से स्पष्ट है कि पुरातन मिश्रवासियो का देवो के साथ गहरा सम्बन्ध था । देव सस्कृत भाषी थे । अत प्राचीनकाल मे मिश्र भी सस्कृत भाषी था ।

## ६—अरब लोग संस्कृत-भाषी थे

१ अरब का पुराना इतिहास लुप्त प्रायः है । पर हैरोडोटस ने अरब की कई बाते और प्राचीन अरबी भाषा के अनेक शब्द सुरक्षित रक्खे हैं । यथा—

(क) अरब के पुराने लोग मित्र देवता को अपनी भाषा में 'अ लित्त' कहते थे । यह मित्र शब्द का साक्षात् अपभ्रश है ।

(ख) अरब की भाषा मे बेकस (**Bachus**) अथवा विप्रचित्ति को ओरोतल **Oroetal** कहते थे । यह रूप भी विप्रचित्ति शब्द का विकार है ।

२ आज भी अरबी भाषा मे अनेक ऐसे शब्द प्रयुक्त होते है, जो संस्कृत के साक्षात् अपभ्रश हैं । यथा—

(क) अरबी भाषा के 'ईद-उल जुहा' ( अर्थात् बलि की ईद ) पदो मे 'जुहा' शब्द ठीक जुहोति क्रिया का रूप है ।

---

१. यही ग्रन्थ, पूर्व पृष्ठ ३,४ । २ भारतवर्षका बृहद् इतिहास, पृष्ठ २०७ ।
३ हैरोडोटस, भाग १ पृष्ठ २१६ ।

**बिम्बप्रतिबिम्बभावोदाहरणेषु कश्चिद् विशेषः। क्वचित्प्रसिद्ध-साधर्म्यतया प्रतीयमानसाधर्म्ययोर्बिम्बप्रतिबिम्बभावः। यथा— "पाण्ड्योऽयमंसार्पितलम्बहारः" इत्यादौ। क्वचिदप्रसिद्धसाधर्म्यतया येन केनचित् प्रकारेणोपात्तसाधारणधर्मयोर्बिम्बप्रतिबिम्बभावः। यथा—"तया विवृद्धाननचन्द्रकान्त्या" इत्यादौ। अत्र हि शरदर्पणयोः स्वतोऽप्रसिद्धसाधर्म्ययोर्विवृद्धाननेत्यादिना समासभेदाश्रयणेनोपात्तसाधारणधर्मयोरेव बिम्बप्रतिबिम्बभावः। यथाकथञ्चित्-साधर्म्यप्रतीतिं विना बिम्बप्रतिबिम्बभावो न सम्भवत्येव।**

**सुधा**

च तानि अच्छानि च, धवलाक्षाणि[१] वेति खण्डश्लेषः। अनुगामित्व [त्व] समास-भेदश्लेषाणां यथा–

तारामुक्ताहारा समुदञ्चितचन्द्ररुचिचर्चा।
विकसितकैरवहासा ज्यौत्स्नीव विधु [ वधू ] र्ज्वरं विधुनोति ॥

अत्र 'ज्वरं विधुनोति' इत्यनुगामि,'तारा'इत्यादौ समासभेदः, चन्द्रपदे श्लेषः।

[ उपचारबिम्बप्रतिबिम्बभावसमासभेदानां यथा ]

विजृम्भमाणोन्नतकोरकस्तनीं सरोजिनीं चुम्बति वासरेश्वरः।
समुल्लसत्कुङ्कुमपङ्कजो [ लो ] हितो युवा नवीनां वरवर्णिनीमिव ॥

इत्यत्र'विजृम्भमाणे स च [ ण-इत्यत्र]' 'समुल्लसत्' इत्यादौ च समासभेदः। सरोजनीवरवर्णिन्योर्बिम्बप्रतिबिम्बभावः, 'चुम्बति' इति मुख [ रवि ]पक्षे उपचार इत्यन्यत्र विस्तरः।

क्वचिदुदाहरणे विशेषं दर्शयति—**बिम्बप्रतिबिम्बभावोदाहरणेषु कश्चिद् विशेष इति।**

तमेव दर्शयति क्वचित्–"पाड्योऽयमंसार्पितलम्बहारः" इत्यादौ प्रसिद्ध-साधर्म्यतया प्रतीययानसामान्यधर्मयोर्बिम्बप्रतिबिम्बभावः। क्वचित्"तया विवृद्धा-ननचन्द्रकान्त्या"इत्यादावप्रसिद्धसाधर्म्यभावेन येन केनचित् प्रकारेणोपात्तसामान्य-धर्मयोर्बिम्बप्रतिबिम्बभावः।

अत्र हि शरदर्पणयोः स्वतोऽप्रसिद्धसाधर्म्ययोः विवृद्धाननेत्यादिना समासभेद-स्याश्रयणेनोपात्तसाधारणधर्मयोरेव बिम्बप्रतिबिम्बभावः, यथाकथञ्चित् साधर्म्य-प्रतीतिं विना तदसम्भवात्। शङ्कते—**नन्विति**[२]।

---

१. मुखपक्षे 'धवलाक्षाणि=धवलनेत्राणि' इति पाठः साधीयान्।

२. 'नन्विति' टीकाग्रन्थान्मूले 'ननु' इति पाठ आसीदिति सम्भाव्यते, साम्प्रतिके मुद्रिते पुस्तके तु नोपलभ्यते।

आगे चलाया। हमारे परिणाम ऊपर लिखे जा चुके हैं। स्वामी दयानन्द सरस्वती जी ने कभी ठीक कहा था—

**इस लिए संस्कृत में ही [ वेद का ] प्रकाश किया जो किसी देश की भाषा नही और वेद-भाषा अन्य सब भाषाओ का कारण है।**

**(सत्यार्थ-प्रकाश, सप्तम समुल्लास)**

यहा सस्कृत शब्द वेद वाक् के लिए प्रयुक्त हुआ है।

पूना नगर में १० जुलाई शनिवार सन् १८७५ के दिन स्वामी दयानन्द सरस्वती जी ने एक व्याख्यान दिया था।[१] उस मे कहा था—

**सस्कृत भाषा सारी भाषाओ का मूल है। अंग्रेजी सदृश भाषाएं उससे परम्परा से उत्पन्न हुई है। एक भाषा दूसरी भाषा का अपभ्रंश हो कर उत्पन्न होती है। 'वयम्' इस शब्द के 'यम् [भाग] को सम्प्रसारण हो कर अंग्रेजी का 'वूई' यह शब्द उत्पन्न हुआ। उसी प्रकार 'पितर' से 'पेतर' और 'फादर', 'यूयं' से 'यू' और 'आदिम' से 'आदम' इत्यादि। ऐसे ऐसे अपभ्रंश कुछ एक नियमो के अनुकूल होते है और कुछ अपभ्रंश यथेच्छाचार से भी होते हैं। इस बारे में बुद्धिमानो को कहने की कुछ अधिक आवश्यकता नही है।**[२]

**दयानन्द सरस्वती, महान् भाषा-शास्त्री**—स्वामी दयानन्द सरस्वती की असाधारण प्रतिभा और उत्कृष्ट विश्लेषण-बुद्धि का पूर्वोद्धृत वाक्य-समूह एक सजीव प्रमाण है। अपभ्रंशा मे सब भ्रंश नियमानुकूल नही हुए, यह त्रिकाल-सिद्ध सिद्धान्त स्वामी जी ने अनायास समझ लिया था। उसी का उल्लेख हम पहले कर चुके है। जर्मनी के युवक वैयाकरणा का भ्रांत मत अब कोई बुद्धिमान् पुरुष स्वीकार नही करता।

पण्डित रघुनन्दन शर्मा ने भी इस विषय मे स्वतन्त्र काम किया, परन्तु योरोप तथा उन के उच्छिष्ट-भोजियो ने उन की कई प्रबल युक्तियो का उत्तर नहीं दिया। हमने इस विषय मे ऐतिहासिक आधार को सब से प्रथम वार

---

१ स्वामी दयानन्द सरस्वती ने पूना में ४ जुलाई सन् १८७५ से विशेष व्याख्यान-माला प्रारम्भ की थी, जो उसी समय मराठी मे अनूदित हो कर तात्कालिक समाचार पत्रों मे छपती रही। उसी व्याख्यान-माला के १५ व्याख्यान हिन्दी-आर्यभाषा में उपदेशमञ्जरी के नाम से छपे हैं।

२ उपदेशमञ्जरी, पृष्ठ ३६, सन् १९१०, बरेली से प्रकाशित।

यच्चोरागामस्य च समागमो यच्च तैर्वधोऽस्य कृतः ।
उपनतमेतदकस्मादासीद् वत काकतालीयम् ॥ इति ।

**अत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ । तेन काकागमनमिव तालपतनमिव काकतालमिति इवार्थे "समासाच्च तद्विषयात्" [पा०सू० ५,३,१०६] इति ज्ञापकात् सुप्सुपेति समासः । उभयत्रोपमेयं क्रमेण देवदत्तागमनं दस्यूपनिपातश्च । तेन देवदत्तदस्यु-समागमः काकतालसमागमसदृश इति फलति । ततः काकतालमिव काकतालीयमिति द्वितीये इवार्थे "समासाच्च तद्विषयात्" इति छप्रत्ययः ।**

**सुधा**

त्वत्रैच्छिक इति दर्शयति—**धर्मलोप** इति । प्रभावादेर्धर्मस्य कल्पनाया वक्तुं शक्यत्वात् । [तदाह] **प्रभावादिनेत्यादि** । उपमानलुप्तां द्विलुप्ताभेदेष्वाद्यं भेदद्वयं त्रिलुप्ताञ्च दर्शयति—**यच्चौराणामिति** । यच्चौराणाम्, अस्य च समागमः; यच्चौरैरस्य वधः कृतः, एतदकस्मादुपनतं काकतालीयमासीत्[१] ।

अत्र भेदान् दर्शयितुं काकतालीयमिति पदस्य व्याख्यानमाह—**अत्रेति** । वृत्तिविषये = समासविषये, तेन = तादृशक्रियावृत्ति-त्वेनेत्यर्थः । काकसमवेता क्रिया काकागमनरूपा, तालसमवेता क्रिया तत्पतनरूपा ।

एतदेव समासवाक्येन मूले कथ्यते । समासविधायकाभावमाशङ्क्य समाधत्ते—**इवार्थे इत्यादि** । तत्र समासाभावेन तद्विषयादित्यनेन इवार्थविषयसमासानुपपत्ते-स्तज्ज्ञापकतेत्यर्थः । अत्रोपमेयं दर्शयति—**उभयत्रेति** । काकागमनतालपतनयो रित्यर्थः । क्रमेण देवदत्तागमनं दस्यूपनिपातश्चोपमेयमित्यन्वयः । तेन = तादृश-क्रियापरयोः काकतालपदयोरिवार्थे समासेनेत्यर्थः । काकतालसमागम इति काका-गमनतालपतनयोरुपमानत्वे तदुपमेयभूतदेवदत्तागमनदस्यूपनिपातयोः पृथगनुपात्त-त्वेनोपमेयतयाऽन्वयायोगात् तस्यैवोपमानत्वमित्यर्थः । ततः = तादृशसमासोत्तर-मित्यर्थः । प्रत्ययार्थोपमायाम् "इवे प्रतिकृतौ" [५,३,९६] इत्यधिकारस्य "समासाच्च तद्विषयात्" [५,३,१०६] इति छप्रत्ययः ।

---

१. **शाब्दबोधस्तु—पूर्वपदस्योपमानकाकागमनपरत्वेन, उत्तरपदस्योक्तपूर्वपदार्थ-समानाधिकरणोपमानतालपतनपरत्वेन, समुदायस्योपमेयदेवदत्तागमनसमाना-धिकरणचौरपतनपरत्वेन उपमानकाकागमनसमानाधिकरणोपमानतालपतनो-पमेयं देवदत्तागमनसमानाधिकरणं चौरपतनमिति समासात् तद्धितसमभि-व्याहारे समासार्थोपमानप्रयोज्योपमानभूततालकृतकाकवधोपमेयः समासार्थो-पमेयप्रयोज्यचौरकृतदेवदत्तवध इति ।**

# चतुर्थ अध्याय

## भारतीय इतिहास की प्राचीनता

**भारतीय सत्य मत**—आर्यावर्त के प्राचीन ऋषिमुनियों, मध्यकालीन महान् आचार्यों, पण्डितों और अनेक आधुनिक विद्वानों का मत है कि भारतीय इतिहास बड़ा प्राचीन है। भारत युद्ध जो द्वापर के अन्त अथवा कलियुग के आरम्भ से कोई ३७ वर्ष पूर्व हुआ[१], अभी कल की बात है। आर्यों का इतिहास उस से भी सहस्रों लाखों वर्ष पूर्व से आरम्भ होता है। वराहमिहिर[२] के अर्थ को पूर्णतया न समझने वाले कल्हण काश्मीरी[3] आदि को छोड़ कर शेष आर्य विद्वानों के अनुसार भारत युद्ध को हुए ५००० वर्ष से कुछ अधिक काल हो चुका है। उस भारत युद्ध से भी कई शताब्दी पूर्व का क्रमबद्ध इतिहास महाभारत और पुराण आदि मे मिलता है। अत. हम कह सकते है कि अनेक अशो मे सुविदित भारतीय इतिहास दस सहस्र वर्ष से कही अधिक पुराना है।

**पाश्चात्य मत**—इस के विपरीत पश्चिम अर्थात् योरोप और अमेरिका के प्राय. सारे आधुनिक ईसाई लेखको और उनका अनुकरण करने वाले कतिपय एतद्देशीय ग्रन्थकारो ने चातुर्य से एक मत कल्पित किया कि आर्य लोग बाहर से आकर भारत में बसे। यह बात आज से कोई ४५०० वर्ष पूर्व हुई होगी। अत भारत मे आर्यो का इतिहास इससे अधिक पुराना कभी हो ही नही सकता। इस विषय के अन्तिम लेखक अध्यापक रैपसन **(Rapson)** का मत है—

> **It is indeed probable that all the facts of this migration, so far as we know them, can be explained without postulating an earlier beginning for the migrations than 2500 B C.[4]**

---

१, देवकी पुत्र कृष्ण का देहावसान द्वापर के अन्तिम दिन हुआ था। तभी युधिष्ठिर ने राज्य छोडा था। युधिष्ठिर-राज्य ३६ वर्ष तक रहा। देखो, महाभारत, मौसल पर्व १।१ तथा ३।२०॥

२ बृहत्संहिता १३।३॥ ३ राजतरङ्गिणी १।५१–५६॥

4 The Cambridge History of India, 1922, Vol 1 p 70

**अत्र धर्मलोपमात्रमैच्छिकम् ।**

यं त्वं पालयसे धर्मं वृत्त्या च नियमेन च ।
स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥

**अत्र 'राघवः शार्दूल इव' इत्यर्थे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति समासे धर्मवाचकयोर्लोपः । अत्र वाचकलोपवद्धर्मलोपोऽपि शास्त्रीयः । सामान्यप्रयोग एवैतत्समासानुशासनात् । धर्मवाचकलुप्तायां धर्मलोपस्यैच्छिकत्वमपि सम्भवति । यथा—**

नृणां यं सेवमानानां संसारोऽप्यपवर्गति ।
तं जगत्यभजन्मर्त्यश्चञ्चा चन्द्रकलाधरम् ॥

**अत्रापवर्ग इवाचरतीत्यर्थेऽपवर्गतीत्यत्राचारार्थस्य क्विपो लोपाद् वाचकवद्धर्मस्यापि लोपः । चञ्चेत्यत्र चञ्चा तृणपुरुष इवेत्यस्मिन्नर्थे 'इवे**

**सुधा**

धर्मलोपस्यैच्छिकत्वमाह—**अत्रे**ति । द्विलुप्ताभेदे धर्मवाचकलुप्तां दर्शयति—यं त्वमिति—हे राघवशार्दूल ! त्वं वृत्त्या नियमेन च यं धर्मं पालयसे स धर्मस्त्वाम् अभिरक्षतु समन्तात् पालयतु । राघवः शार्दूल इवेति समासः, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" [२,१,५६] इति तदनुशासनात् । अत्र धर्मस्य च वाचकस्य च लोपः शास्त्रकृतः । धर्मतःप्रयोगेऽनुशासनप्रवृत्तेर्दुर्लभत्वात् । धर्मवाचकलुप्तायां शास्त्रीय एव तयोर्लोप इति नियमस्तु नास्तीत्याह—**धर्मवाचकलुप्तायामिति** । तदुदाहरति—**यथेति** । यं सेवमानानां नृणां संसारोऽपि अपवर्गति, जगति चन्द्रकलाधरं तं शिवम् अभजन्मर्त्यो मनुष्यश्च चञ्चा इत्यन्वयः । अपवर्गतीत्यत्र "उपमानादाचारे" [३,१,१०,] इति 'सूत्रविहिताचारार्थक्विप इवेन सह लोपाद् धर्मवाचकलुप्ता । उत्तरदले तां दर्शयति—**चञ्चे**ति ।

---

**विहितस्य तद्धितस्यापि तदवाचकत्वप्रसङ्गादिति तत्त्वम् । एवं तद्धितार्थभूताया धर्मोपमानलुप्ताया अपि नात्रोक्तिः । तद्धितोत्पत्तिदशायां काकतालपदस्य तालकृतकाकवधे लक्षणास्वीकारेण तदा काकतालपदस्य श्रूयमाणत्वेनोपमानलुप्तत्वाभावात् । न च लक्षणायां मानाभावः, उपमानपरत्वाभावे तदुत्तरमिवार्थे तद्धितानुपपत्तेरेव मानत्वादिति कृतं पल्लवितेनेति विश्वेश्वरपण्डिताः [ अलङ्कारकौस्तुभः, पृ. १२७ ]**

१. **'इति सूत्राधिकारपठित "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति वार्तिकविहिताचारार्थकक्विपः' इति पाठो ज्ञेयः । अन्यथा तेन सूत्रेण क्विपो विधानाभावाद् अत्रत्यग्रन्थासङ्गतिः स्यादिति बोध्यम् ।**

नन्दी, औद्दालकि श्वेतकेतु तथा बाभ्रव्य पांचाल के कामशास्त्रो, राजपुत्र और पालकाप्य के हस्तिशास्त्रो, शालिहोत्र और गार्ग्य के अश्वशास्त्रो तथा वास्तु, ज्योतिष, वैद्यक, व्याकरण, छन्द के शतश शास्त्रों, महाभारत और मानव धर्मशास्त्र की संहिताओं, श्रौत और गृह्य सूत्रों, वेदांत और मीमांसा दर्शनों तथा निरुक्त आदि शास्त्रों सुतरां सारे प्राचीन साहित्य को जो महाभारत काल ( लगभग ३००० पूर्व विक्रम ) मे अथवा उस से पूर्व बना, अब विक्रम से ६०० वर्ष पूर्व तक के अन्तर्गत लाया जाता है। स्वय भूल करने वाले इन पक्षपाती लोगो ने आर्य ऐतिह्य के प्राय सारे ही अशो मे अविश्वास भाव को उत्पन्न करने का अणुमात्र भी परिश्रम शेष नहीं रहने दिया। यूनान का इतिहास प्राय. सत्य समझा जा सकता है, काल्डिया, मिश्र और चीन के ऐतिहासिक भी पर्याप्त ठीक माने जा सकते हैं, यहूदी इतिहास बहुत अधिक सच्चा माना जा सकता है और इस्लामी ऐतिहासिको पर पर्याप्त विश्वास हो सकता है, पर कराल-काल के हाथो से बचा हुआ आर्य ऐतिह्य इन से नितान्त मिथ्या बताया जाता है। यह क्यों ? कारण कि यह बहुत पुरानी बाते कहता है।[१] यह अपने को विक्रम से सहस्रो वर्ष पूर्व तक ले जाता है, नहीं, नहीं, क्योंकि यह कल्प कल्पान्तरो का वर्णन करता है।

विचारने का स्थान है कि क्या आर्यावर्त के सारे ग्रन्थकारों ने अनृत-भाषण का व्रत ले लिया था ? क्या पूर्व और पश्चिम तथा उत्तर और दक्षिण के सारे ही भारतीय लेखको ने आर्य इतिहास को अति प्राचीन कहने का एक मत कर लिया था ? यदि ऐसी ही बात थी तो इससे उन्हे क्या लाभ अभिप्रेत था ? सत्यभाषण का परमोत्कृष्ट आदर्श उपस्थित करने वाले आर्य ऋषि इतने अनृतवादी हो, ऐसा कहना इन्ही योरोपीय प्रोफेसरो का दु साहस है। अस्तु, अब अधिक न लिख कर हम वे प्रमाण उपस्थित करते है, जिन से स्पष्ट ज्ञात होगा कि भारतीय इतिहास बडा प्राचीन है।

## १.—व्याकरण महाभाष्य का साक्ष्य

पाणिनीय सूत्र ३।२।११५पर भाष्य करते हुए पतञ्जलि ( १४०० विक्रम पूर्व ) लिखता है-

1 The earliest of these genealogies, like the most ancient chronicles of other peoples, are legendry,

Cambridge H of India, 1922, Vol. I p 304

**'यच्चोराणामस्य च' इति श्लोकस्य द्वितीयपाठे समासार्थोपमायाम्। एवं लुप्ताया अष्टौ विधाः प्रदर्शिताः।**

**सुधा**

त्रिलुप्तायां धर्मलोपस्य शास्त्रीयत्वमेवेति नियमो नास्तीत्याह—**त्रिलोप** इति। द्वितीयपाठे 'किमिति ब्रूमो वयमिदम्' इति पाठे इत्यर्थः। **समासेति**=काकागमनमिव, तालपतनमिवेति, काकतालमित्यत्रेत्यर्थः। प्रकरणमुपसंहरति—**एवमिति**।

यत्तु, रसगङ्गाधरे एतत्पद्यनिर्माणमुद्दिश्य "इदञ्च पद्यमपशब्ददुष्टमवैयाकरणतां कर्तुः प्रकाशयति। तथा हि—**पुरत** इति नगरवाचिनः पुरशब्दात्तसिलि, तासां नगरादित्यर्थासङ्गतेः। न हि पूर्ववाचकः पुरशब्दः क्वापि श्रूयते। पूर्वशब्दात्तु "पूर्वाधरावराणामसि पुरधवश्चैषाम्" [५,३,३९] इत्यसौ पुरादेशे च पुर इति वाच्यं न पुरत इति। अत एव 'अमुं पुरः पश्यसि' इति महाकविः प्रायुङ्क्त। एवमेव 'मुखस्य पुरतश्चन्द्रो निष्प्रभः' इति अप्रस्तुतप्रशंसोदाहरणे तैरपशब्दितम्।

तथा चाहुर्वैयाकरणाः[1]। 'पत्या पुरतः परतः', 'आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि' इति...[!] 'पुरतः सुदती समागतं माम्' इत्यादयः सर्वेऽपि व्याकरणाज्ञानमूला अपशब्दाः' इति प्रतिपादितम्। तदप्ययुक्तमेव; पुरत इत्यस्यापशब्दत्वं किमनुशासनाभावात् कल्प····[ल्प्य]ते अप्रयोगाद्वा! नाद्यः, "पुर अग्रगमने" इति धातोः घञर्थे कविधानमिति कप्रत्यये सार्वविभक्तिकतसा तसा ...[!] तत्सिद्धावनुशासनसत्त्वात्। किञ्च "दक्षिणोत्तराभ्यामतसुच्" [५,३,२८]इत्यत्र इ[त]सुजैव पुंवद्भावविधानेन सिद्धेरतसुचो विधानमन्यतोऽपि तद्विधानं ज्ञापयति। तेन क्विबन्तात् पुरधातोरसुच्। न च "र्वोरुपधाया दीर्घ इकः" [८,२,७६] इति दीर्घापत्तिः, भसंज्ञासत्त्वेन दीर्घाप्रवृत्तेः।

चित्त्वप्राप्तमन्तोदात्तं बाधित्वा पाक्षिकाद्युदात्तार्थं तद्विधानमिति व्याख्यानापेक्षया तु यथोक्तज्ञापनस्यैव युक्तत्वात्। न च विनिगमकाभावः, लक्षणानुरोधस्यैव तत्सम्भवाच्च। "स्यात् पुरः पुरतोऽग्रतः" इत्यमरसिंहेन निपातान्तरत्वस्य स्वीकारादनुशासनस्य सम्भवाच्च।

नान्त्यः, 'इयञ्च तेऽन्या पुरतो विडम्बना' इत्यादेर्महाकविकालिदासेनैव प्रयुक्तत्वात्। 'पश्यामि तामित इतः पुरतश्च पश्चात्' इत्यादेर्भवभूतेः प्रयोगाच्च। यत्तु, दुर्घटवृत्तिकारेण 'पिपर्तेर्भावे कविधानोत्तरं तसिल्प्रत्ययेन तत्सिद्धिः' इति तत्समर्थनं कृतम्। तत्प्रकृतार्थानुपयोगादयुक्तमेवेति दिक्।

---

१. प्राञ्च इत्यादिः।

तार्णविन्दवीय ४।२।२८ तथा अन्यत्र भी सैकडो ऋपियो और जनपदो का उल्लेख देखने योग्य है।

## २—सम्राट् खारवेल का शिलालेख

श्रीयुत काशीप्रसाद जायसवाल के अनुसार महाराज खारवेल का काल १६० पूर्व ईसा है। जैन-आचार्य **हिमवान्** के नाम से जो **थेरावली** प्रसिद्ध है,[1] उस के अनुसार **भिक्खुराय = खारवेल** का राज्याभिषेक वीरसवत् ३०० और स्वर्गवास वीरसवत् ३३० मे हुआ था। इस थेरावली के अनुसार भी खारवेल का काल लगभग इतना ही है। इस खारवेल का एक शिलालेख हाथीगुम्फा मे मिला है। उसकी ११वी पक्ति में लिखा है—

**पुवराजनिवेसितं पीथुडगदभनगले नेकासपति जनपदभावनं तेरसवससत केतुभद तितामरदेह सघाट ।**[2]

अर्थात्—[अपने राज्य के ग्यारहवे वर्ष मे] उसने महाराज केतुभद्र की नीम की मूर्ति की सवारी निकाली, जो १३०० वर्ष पहले हो चुका था। यह मूर्ति प्राचीन राजाओ ने पृथूदकदर्भ नाम नगर मे स्थापित की थी।

इस से सिद्ध होता है कि महाराज खारवेल से १३०० वर्ष पहले का इतिहास उस समय विदित था, अथवा विक्रम से १४०० या १४५० वर्ष पहले के राजाओ का ज्ञान तो उन दिनो के लोगो को अवश्य था।

यहा कई लोग १३०० के स्थान मे ११३ वर्ष अर्थ मानते हैं। परन्तु यह बात अभी विचारणीय है।

## ३—कलियुग संवत्

कलियुग सवत् आर्यो का एक प्रसिद्ध संवत् है। इसका आरम्भ ३०४४ पूर्व विक्रम से होता है। इस सवत् का प्रयोग इस बात का स्पष्ट प्रमाण है कि भारतीय लोग विक्रम से न्यून से न्यून ३०५० वर्ष पूर्व का अपना इतिवृत्त जानते थे। और क्योकि भारतीय विद्वान् जो इस सवत् का प्रयोग करते रहे हैं, अपने को इसी देश का निवासी लिखते रहे हैं, अत. यह सिद्ध है कि भारतीय इतिहास निस्सन्देह कलि सवत् जितना पुराना है।

---

१ नागरी प्र० प० भाग ११–अक १, मुनि कल्याणविजय जी का लेख, पृ० १०३।

2—J B O R S 1917, p 457

सप्तविधा। उपमानलुप्ता वाक्यसमासयोर्द्विविधा। धर्मवाचकलुप्ता क्विप्समासयोर्द्विविधा। धर्मोपमानलुप्ता वाक्यसमासयोर्द्विविधा। उपमेयवाचकलुप्ता क्यचि एकविधा। धर्मवाचकोपमानलुप्ता समास एवैकविधेति। यदाहुः—

पूर्णा लुप्ता च सा द्वेधा श्रौत्यार्थी चेति ते पुनः।
द्विविधे प्रथमा वाक्ये समासे तद्धिते भवेत्॥
तद्वल्लुप्तापि धर्मस्य लोपे श्रौती न तद्धिते।
इवादिलोपे द्विविधे णमुलि क्यचि च क्यङि॥
तथा णिनौ समासे च सप्तधा परिकीर्तिता।
उपमानस्य लोपे तु द्विधा वाक्यसमासयोः॥
इवादिधर्मलोपेऽपि द्विविधा क्विप्समासयोः।
धर्मोपमानयोर्लोपे वाक्यगा च समासगा॥
इवादेरुपमेयस्य द्वयोर्लोपे भवेत् क्यचि।
इवादिधर्मोपमानलोपे त्वेषा समासगा॥ इति॥

**अत्रोदाहरणानि तन्मतरीत्या संगृह्यास्माभिर्लिख्यन्ते—**

'यस्याज्ञा शिरसोह्यते सुमनसां वृन्दैर्यथा मालिका
बद्ध्वा मुञ्चति यः पशूनिव जनान् यस्याभ्रवद्भैभवम्।
हृद्यं शेवधिना समं हृदि भजन्त्यानन्दसारोपमं
यं धन्याः शशिवत् प्रसन्नवपुषे तस्मै नमः शम्भवे॥

**सुधा**

तस्येवेत्यर्थकतया नित्यधर्मसाकाङ्क्षत्वात् तेन धर्मलुप्ताया भेदाः पञ्च। कर्मणमुल्, कर्तृणमुल्, कर्मक्यच्, अधिकरणक्यच्। क्यङ्णिन्समासभेदाद् वाचकलुप्ताभेदाः सप्त। वाक्यसमासगतत्वेनोपमानलुप्ताभेदौ [द्वौ]। क्विप्समासगतत्वे धर्मवाचकलोपेऽपि द्वौ। वाक्यसमासभेदाद् धर्मोपमानलोपेऽपि द्वौ। उपमेयवाचकलुप्ता क्यच्येकैव। समासगतत्वेन त्रिलुप्तापि तथा।

अत्र विभागे प्रमाणमाह—**यदाहुरिति**। पूर्णेत्यारभ्य समासगेत्यन्तं श्लोकपञ्चकं विभागव्याख्ययैव व्याख्यातम्। तत्र 'चन्द्र इव मुखम्' इति श्रौती, 'चन्द्रतुल्यं मुखम्' इत्यार्थीति बोध्यम्। विभागानुसारेणोदाहरणानि वक्तुमुपक्रमते—**अत्रेति**। उपमाविषये [इ]त्यर्थः। तेनान्यत्र स्वकृतोदाहरणाभावेऽपि न क्षतिः। तत्र प्रथमं पूर्णायाः षड् भेदानेकेनैव श्लोकेन दर्शयति—**यस्येति**। सुमनसां वृन्दैः शिरसा

इस सम्बन्ध मे डा० फ्लीट ने दो लेख लिखे थे । वे लेख इस सम्बन्ध मे समस्त पाश्चात्य विचार का सग्रह करते ह । उन के कथन का सार उन के लेखो के निम्नलिखित उद्धरणो से दिया जा सकता है ।

But any such attempt ignores the fact that the reckoning is an invented one, devised by the Hindu astronomers for the purposes of their calculations some thirtyfive centuries after that date.

The general idea of the ages, with their names, and with a graduated deterioration of religion and morality, and shortening of human life,—with also some conception of a great period known as the kalpa or æon, which is mentiond in the inscription of Asoka ( B C. 264-227 ),—seems to have been well established in India before the astronomical period But we cannot refer to that early time any passage assigning a date to the beginning of any of the ages, or even alloting them the specific lengths, whether in solar years of men or in divine years mentioned above.

Literary instances are not at all common, even in astronomical writings The earliest available one seems to be one of A D 976 or 977 from Kashmir it is the year in which Kayyata, son of Chandraditya wrote his commentary on the Devisataka of Anandavardhana,when Bhimagupta was reigning [1]

अर्थात्—(क) कलि सवत् की गणना भारतीय ज्योतिषियो ने उस काल के कोई ३५ शताब्दी पश्चात् अपनी सुविधा के लिए निकाली है ।

(ख) युगो और युगनामो आदि का विचार ज्यौतिष काल ( पहली से तीसरी शताब्दी विक्रम ) से पहले सुनिश्चित हो चुका था, परन्तु कोई एक युग कब आरम्भ होता है और उस मे कितने मानुष वा दैव वर्ष है, ऐसा बताने वाला कोई प्राचीन वाक्य नही है ।

(ग) ग्रन्थकार भी कलिसवत् का प्राय प्रयोग नही करते । सब से पुराना ग्रन्थकार कैयट है जो देवीशतक की अपनी टीका मे कलि ४०७८ का उल्लेख करता है । यथा—

---

१ पृ० ४८५ ४८६ ।

सुधा

नचैवमुपमानोपमेययोर्भेदान्वयः कथमिति वाच्यम्, प्रकारीभूतविभक्त्यर्थ-सम्बन्धस्यैव फलानुरोधाद् नामार्थयोर्भेदान्वये प्रकारीभूतनिपातार्थसम्बन्धस्यापि हेतुताकल्पनात् सदृशाचन्द्रीयं मुखमिति बोधः। षष्ठ्यर्थस्वामित्ववादिनां प्राचां मते प्रकारीभूतविभक्त्यर्थसम्बन्धेन चैत्रादेर्धनादावन्वयात् 'स्वामिचैत्रीयं धनम्' इतिवत्। एवञ्च 'मुखं पद्मञ्च तुल्यम्' इत्यनेनोभयत्र सादृश्यप्रत्ययादि[वि]शेषे यथेवादिश्रुतिः साधारणधर्मविशेषरूपाह्लादकत्वसम्बन्धमप्राप्य न पर्यवस्यति। तुल्यादिपदश्रुतिस्तु धर्मविशेषसम्बन्धावगमं विनापि सामान्यतः साधर्म्यमात्रेण पर्यवस्यति। तथा हि— 'पद्ममिव मुखम्' इत्यादावुपात्तस्याक्षिप्तस्य [ वा ] रमणीयत्वादेः सम्बन्धं विषयीकृत्य पर्यवसानम्, इवादीनां धर्मविशेषसम्बन्ध एव शक्त्यङ्गीकारात्। तुल्यादि-शब्दास्तु नैव [ म् ], 'पद्मेन तुल्यम्' इत्यत्रोभयत्रापि सामान्यतस्तुल्यं [ त्वं ] बोधयित्वा विश्रान्तेषु [ तेषु ] धर्मविशेषं विना कथं तुल्यतेति प्रतीत्यनुपपत्त्या धर्म-विशेषसम्बन्धप्रतीतिः [ तेः ]। तस्मात् प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या च सम्बन्ध-बोधे विशेषाच्छ्रौतार्थविभाग इति प्रदीपादयः।

**महेश्वरादयस्तु**—चन्द्रप्रतियोगिकसादृश्यमिवार्थः, 'घटो न' इत्यत्र घटप्रतियोगिका-भावस्य नञर्थतावत् सादृश्यमात्रस्य इवार्थत्वे चन्द्रसादृश्यमित्यादिवच्चन्द्रस्यैव मुखमित्यापत्तेः। इवादेः सादृश्यमात्रवाचकतया ततः षष्ठ्यर्थभूतसम्बन्धालाभेन तद्बोधाय षष्ठीप्रयोगावश्यकत्वात्। अस्मद्रीत्या सादृश्यप्रतियोगिताया इवादिपद-वाच्यतया षष्ठ्यपेक्षाया अभावात्। अतो निपातस्थलेऽन्विताभिधानम्, न तुल्यादिपदेष्विति तयोर्विशेषं वदन्ति। तन्न, दृष्टान्तस्यासम्भवात्, असमस्तनञोऽ-भावमात्रपरत्वेन प्रतियोगित्वांशस्य संसर्गमर्यादयैव प्रतीतेः, घटपदस्यैव तत्प्रति-योगिकाभावपरत्वे नञस्तात्पर्यग्राहकतायाः सुवचत्वाच्च। तस्मात् 'चन्द्र इव' इत्यादौ प्रतियोगितायाः संसर्गतयैव लाभेन षष्ठ्यभावाच्चन्द्रस्य सादृश्यमित्यत्र संसर्गतया तद्भानसम्भवात् षष्ठीत्यस्य सुस्थतया चन्द्रप्रतियोगिकसादृश्येन इवपदस्य शक्तिः, घट-प्रतियोगिकाभावे [ न ] वा नञादेः शक्तिरित्येव योग्यमिति दिक्।

**चक्रवर्तिनस्तु**—चन्द्र इव मुखमित्यादावुभयविशेष्यक एव बोधः। 'यथा चन्द्र-स्तथा मुखम्' इत्यत्र यादृशधर्मवान् चन्द्रः' तादृशधर्मवन्मुखमितिवत्। अत एव 'हंसीव धवलश्चन्द्रः' इत्यादौ यादृशधावल्यवती हंसी तादृशधावल्यवाँश्चन्द्र इति बोधे पुंल्लिङ्गधवलपदस्य हंस्यामन्वयाभावाद् दोषत्वोपपत्तिः। अन्यथा हंसीसदृशश्च[ न्द्रः ] इत्यन्वयसम्भवाद् दोषत्वानुपपत्तेः। एवञ्चोपमानोपमेययोः द्वयोरपि साधर्म्यस्य शाब्दत्वाच्छ्रौतीत्वम्। 'चन्द्रेण तुल्यं मुखं मनोज्ञम्'

से पूर्व यह परम्परा और भी अधिक सुरक्षित थी। उस काल मे मैगस्थनेज ने ये पंक्तिया लिखी। अत इन की सत्यता का आधार विशेष था।

हैरोडोटस आर्या को भारत का निवासी ही मानता है, और शको को मध्य एशिया का।

## २—मानव-धर्मशास्त्र

वर्तमान स्मृतियो और धर्मसूत्रो मे से मानवधर्मशास्त्र सब से पुराना है। मानवधर्मशास्त्र की इस समय यद्यपि भृगु और नारद आदि की संहिताए मिलती है, परन्तु उन्होने मूल का लोप नही किया। भृगु और नारद की संहिताओ मे सैकडो श्लोको की समानता इस बात का प्रत्यक्ष प्रमाण है। उसी मूल का उन्हो ने सम्पादनमात्र किया है। इस प्रकार हम जानते हैं कि मानव-धर्मशास्त्र वर्तमान ब्राह्मण ग्रन्थो से पुराना है। ब्राह्मण ग्रन्थो का बहुत सा भाग महाभारत-काल का है। वह याज्ञवल्क्य आदि की कृति है। श्लोकबद्ध मानवधर्मशास्त्र उन से भी पहिले विद्यमान था। उस मानवधर्मशास्त्र मे **ब्रह्मावर्त, ब्रह्मर्षिदेश, मध्यदेश** और **आर्यावर्त** का लक्षण कहा गया है।[१] कही कही ब्रह्मावर्त के स्थान मे आर्यावर्त पाठ भी है।[२]

मनुस्मृति के लेख से स्पष्ट ज्ञात होता है कि ब्रह्मावर्त आदि देश अत्यन्त प्राचीन और देवताओ तथा ब्रह्मर्षि लोगो के बनाए हुए हैं। तथा उस समय भी संसार मे म्लेच्छ देश थे। यदि आर्य लोग विदेश से आकर यहा बसे होते तो भारत के मध्यस्थ देशो को इतना पवित्र और भारत से बाहर के देशो को म्लेच्छदेश और इतना अपवित्र न कहते। मनुस्मृति के अगले श्लोको से यह पता लगता है कि भारत की पश्चिमोत्तर सीमा के समीप के लोग भी पहले क्षत्रिय थे, परन्तु ब्राह्मण उपदेशको के वहा न पहुँचने से कालान्तर मे शूद्र हो गये।[३] वे जातिया पौण्ड्र, चौड, द्रविड, काम्बोज, यवन, शक, पारद, पल्लव, चीन, किरात, दरद, और खश थी। इन मे से यवन और शक तो निस्सन्देह वर्तमान अफगानिस्तान से परे की जातिया थी।

---

१ मनु २।१७-२२॥

२. मानवधर्मप्रकाश। अनुवादक गुलजार पण्डित, बनारस, सन् १८५८। ३ १०।४३, ४४॥ तथा देखो ऐतरेय ब्राह्मण ७।१८॥

## ३—प्राचीन इतिहास

आर्यावर्त का सारा प्राचीन इतिहास इस बात में सहमत है कि मनु हमारा एक प्राचीनतम पुरुष और अयोध्या भारत में हमारा पहला नगर है। इस अयोध्या के विषय में वाल्मीकीय रामायण बालकाण्ड ५।२ में लिखा है—

**अयोध्या नाम तत्रासीन्नगरी लोकविश्रुता।**
**मनुना मानवेन्द्रेण यत्नेन परिनिर्मिता॥**

अर्थात्—मनुष्यों के राजा मनु ने जो अयोध्या नगरी बनाई।

इस मनु का इतिहास महाभारत से सहस्रों वर्ष पहले के काल से सम्बन्ध रखता है। जब आर्य लोग उस काल से इस देश में बस रहे हैं, तब यह मानना कि विक्रम से २०००-२५०० वर्षपहले आर्य लोग भारत में आए, एक स्वप्नमात्र है।

भला पश्चिमीय विचारों के मानने वाले आधुनिक अध्यापकों से पूछो कि क्या प्रसेनजित् कोसल, चण्ड प्रद्योत, बिम्बसार आदि के कोई शिलालेख अभी तक मिले हैं या नहीं। यदि नहीं मिले तो पुनः आप बौद्ध और जैन साहित्य में उल्लेखमात्र होने से इन का अस्तित्व क्यों मानते हो। यदि सहस्रों गप्पों के होते हुए भी बौद्ध और जैन साहित्य इतना प्रामाणिक है, तो दो चार असम्भव बातों के आ जाने से महाभारत और दूसरे आर्य-ग्रन्थ क्यों प्रमाण नहीं।

बात वस्तुतः यह है कि महाभारत आदि को प्रायः सत्य इतिहास मानने से पश्चिमीय विचार वालों की अनेक निराधार कल्पनाओं का अनायास खण्डन हो जाता है, अतः इन के सत्य मानने में उन्हें पूर्ण सङ्कोच रहता है। बस इसी कारण इन लोगों ने ठेका ले लिया है कि हमारे सारे प्राचीन ऐतिह्य को असत्य सिद्ध किया जाये।

### महाभारत का साक्ष्य

हम पहले इसी प्रकरण में लिख चुके हैं कि भारतवर्ष इन्द्र का, वैवस्वत मनु का, इक्ष्वाकु आदि का प्रिय देश था। जब आर्य लोग इन्द्र के काल से यहां रहते थे तो उन्हे बाहर से आया कहना मिथ्यात्व की चरम सीमा है।

## ४—आधुनिक पश्चिमीय विचार की परीक्षा

आधुनिक पश्चिमीय विचार के अनुसार आर्य लोग ईरान आदि किसी

विदेश से भारत मे आए। इस विषय से सम्बन्ध रखने वाला अध्यापक रैपसन का मत पृ० ६५, ६६ पर उद्धृत किया जा चुका है। तदनुसार भारत मे आर्यो का आगमन २५०० पूर्वविक्रम के पश्चात् हुआ होगा। इस विषय मे जो प्रमाण राशि पश्चिम के लेखको ने एकत्र की है, वह दो भागो मे बाटी जा सकती है। वे दो भाग निम्नलिखित हैं—

१—आर्या के मूल ग्रन्थ वेद मे दूसरी भाषाओ के शब्दो का अस्तित्व।

२—भारतीय आर्यो के अस्थि परिमाण की पश्चिमीय आर्यो के अस्थि परिमाण से समानता और आर्येतर भारतीयो से असमानता।

क्या यह प्रमाणराशि सत्य पर आश्रित है, अब इस की परीक्षा की जाती है।

## १—वेद में दूसरी भाषाओं के शब्दो का अस्तित्व

आधुनिक पश्चिमीय विचार वाले लोग कहते हैं कि वेदा मे अनेक ऐसे शब्द हैं जो ससार की अन्य भाषाओ से लिए गए हैं। तथा कई ऐसे शब्द भी है कि जिन के रूप पर गम्भीर ध्यान देने से पता लगता है कि उन का पूर्वरूप कुछ और था। पहले मत का एक उदाहरण परलोकगत पण्डित बालगङ्गाधर तिलक ने उपस्थित किया है।[१] उन का कथन है कि अथर्ववेदान्तर्गत **आलिगी, विलिगी, उरुगूल** और **ताबुव** शब्द कालडियन भाषा के हैं। इन शब्दो का वास्तविक अर्थ भी वहीं पर प्रचलित था। उन्हीं के ससर्ग से ये शब्द वेद मे आए। इसी मत के सम्बन्ध मे दूसरे लोगो का कहना है कि वेद और जन्द अवेस्ता के कई शब्द समान रूप के हैं। परन्तु वे दोनो शब्द भाषा विज्ञान की दृष्टि से पीछे के है। उन का पहले कोई और रूप था। और क्योकि जन्द अवेस्ता की रचना ईरान मे की गई तथा वेद की भारत मे, अत इन रचनाओ के काल से पहले भारतीय और ईरानी आर्य किसी ऐसे स्थान मे एकत्र रहते थे, जहा जन्द और वेद की भाषा से पूर्व की भाषा अथवा इन दोनो भाषाओ की मातृ-भाषा बोली जाती थी।

---

१ भण्डारकर कमैमोरेशन वॉल्यूम पृ० २१—२४।

# अथोपमेयोपमानिरूपणम्

उपमानोपमेयत्वं द्वयोः पर्यायतो यदि ।
उपमेयोपमा सा स्याद् द्विविधैषा प्रकीर्तिता ॥

यदि द्वयोर्यद् वर्ण्यते, सोपमेयोपमेत्युच्यते तदा तुल्ययोगितायामतिव्याप्तिः । तत्र—

जनस्य तस्मिन् समये विगाढे बभूवतुर्द्वौ सविशेषकान्तौ ।
तापापनोदक्षमपादसेवौ स चोदयस्थौ नृपतिः शशी च ॥

इति द्वयोर्नृपशशिनोर्युगपदेकधर्मान्वयवर्णनात् । अतः **पर्यायेणे**त्युक्तम् । तथापि—

**सुधा**

एवमुपमालङ्कारं व्याकृत्य तत्त्वेन संग्राह्यामुपमेयोपमामनन्वयात् पूर्वं व्याकर्तुमुपक्रमते—**अथेति** । अनन्वये उपमित्यनिष्पत्तेरुपमात्वेन संग्राह्यत्वाभावात् । अत एव द्वितीयसदृशव्यवच्छेदफलमनन्वयमतिक्रम्य तृतीयसदृशव्यवच्छेदफलिकाया एतस्या पूर्वमेवोपपादनम् ।

अत एव 'अस्या भेद उपमेयोपमा निरूप्यते' इति रसगङ्गाधरेऽपि एतत्प्रारम्भे प्रतिपादितम् । **निरूपणमिति** । निरूपणञ्च प्रारम्भजनकशब्दप्रयोगः । तत्र प्राचीनोक्तमुपमेयोपमालक्षणं सव्याख्यानं खण्डयितुमुपन्यस्यति—**उपमानोपमेयत्वमिति** । यदि द्वयोः पर्यायत उपमानोपमेयत्वं वर्ण्यते, सा उपमेयोपमा । एषा साधारण्यवस्तुप्रतिवस्तुभावाभ्यां द्विविधा प्रकीर्तिता इति लक्षणप्रतिपादककारिकान्वयः ।

अत्र पदानां सार्थकत्वं कथयितुमुपक्रमते—**यदीति** । द्वयोर्यद्वर्णनं सोपमेयोपमा इत्येतावन्मात्रोक्तौ तुल्ययोगितायामतिव्याप्तिः ।

अतिव्याप्तेः स्थलं दर्शयति—**जनस्येति** । तस्मिन् समये ग्रीष्मे विगाढे कठिने सति जनस्य द्वौ सविशेषं सातिशयं यथा तथा कान्तौ बभूवतुः । कौ द्वौ ? तापापनोदे क्लेशस्फोटने क्षमा योग्या पादयोरङ्घ्र्योः पादानां रश्मीनाञ्च सेवा ययोस्तौ उदयस्थौ नृपतिः कुशः, शशी चन्द्रश्चेत्यन्वयः । अत्र नृपशशिनोः युगपदेकस्मिन् मनोहरत्वरूपधर्मान्वयदर्शनाद् द्वयोरपि वर्ण्यत्वेन वर्तमानयोर्धर्मैक्यरूपतल्लक्षणस्य सत्त्वेनातिव्याप्तेः स्फुटत्वात् । तद्व्यावर्तकविशेषणमाह—**अतः पर्यायेणेति** । तथा च पर्यायेण वर्णनाभावान्नातिव्याप्तिरित्यर्थः । उपमानोपमेयत्वमित्यस्य सार्थकतामाह—**तथापीति** । द्वयोः पर्यायेण यद्वर्णनं सोपमेयोपमेत्युक्तेऽपीत्यर्थः ।

दृढ कर लिया है, और पुन वे उसी के आश्रय पर इतिहास की कल्पना करते हैं। हमारा मत है कि यदि सत्य का अन्वेषण करना है तो अनुसधान ठीक इस के विपरीत होना चाहिये।

## यथार्थ अन्वेषण की रीति

हमारा ध्येय इतिहास के यथार्थ अध्ययन से सफल हो सकता है। आधुनिक भाषा-मत की प्रत्येक बात को परखने के लिए हमे देखना होगा कि उसके द्वारा निकाले गए परिणाम यथार्थ इतिहास से टक्कर खाते हैं, वा नही। फारस, यूनान, कालडिया, ऐसीरिया आदि देशो का प्राचीन इतिहास अधिकाश नष्ट हो चुका है। जो बचा है, वह पश्चिमीय ऐनक से देखा गया है। भला आज कौन कह सकता है कि वर्तमान यूनानी भाषा कब से प्रचलित है। अमुक शताब्दी मे अपने से पूर्व की भाषा से इस मे अमुक अमुक परिवर्तन आए। कौन बता सकता है कि ईरान देश मे छठी शताब्दी पूर्व ईसा मे प्रचलित फारसी भाषा कब से वहा बोली वा लिखी जाती थी। उन देशा के इतिहासो के प्राचीन वृत्तान्त प्राय नष्ट हो चुके है। यह तो भारत ही है कि जहा प्राचीन इतिहास की सामग्री भरपूर सुरक्षित है। भारत के उस इतिहास से हमे पता लगता है कि महाभारत काल (३०५० पूर्व विक्रम के समीप) मे भारत मे जहा ब्राह्मण ग्रन्थो के अनेक भागो का प्रवचन हो रहा था, वहा ठीक उसी काल मे साधारण सस्कृत मे अनेक ग्रन्थ रचे जा रहे थे। महाभारत का अधिकाश भाग तब ही रचा गया। अग्निवेश की सहिता का चरक द्वारा प्रति सस्कार उन्ही दिनो मे हुआ। अनेक शिक्षा ग्रन्थ तभी प्रणीत हुए। आपस्तम्ब, बोधायन आदि के गृह्य और धर्मसूत्र तब ही सूत्रित हुए। यही नही, सैकडा अन्य ग्रन्थ उसी काल की कृति है। यह एक ऐतिहासिक सत्य है और आर्य इतिहास म इस के अकाट्य प्रमाण हैं।

इस के अतिरिक्त हम यह भी जानते हैं, कि साधारण सस्कृत उस काल से भी सहस्रो वर्ष पहले से चली आ रही है। उस सस्कृत का दूसरी भाषाओ से क्या सम्बन्ध है। ऐतिहासिक दृष्टि से यह अभी विचारा ही नही गया।

देखिए **जीन प्रजाईलुस्की** लिखता है कि सस्कृत का **बाण** शब्द जो ऋग्वेद ६।७५।१७ मे मिलता है, अनार्य भाषाओ से लिया गया है।[1]

1—Pre-Aryan and Pre-Dravidian in India, University of Calcutta 1929, pp 19—23.

**पमेयोपमासंग्रहाभावप्रसङ्गात् । अतः पर्यायेणेत्युक्तम् । एवमपि— 'भणितिरिव मतिर्मतिरिव चेष्टा' इत्यादिरसनोपमायां मतिचेष्टयोः पर्यायभेदेनोपमानत्वस्योपमेयत्वस्य च सत्त्वेनातिव्याप्तिपरिहारायैकस्मिन् पर्याये यं प्रत्युपमानत्वं तं प्रत्येव पर्यायान्तरे उपमेयत्वं विवक्षणीयम् ।**

**द्विविधैषेत्युक्तम् । द्वैविध्यं धर्मस्य साधारण्यवस्तुप्रतिवस्तुभावाभ्याम् ।**

सुगन्धि नयनानन्दि मदिरामदपाटलम् ।
अम्भोजमिव ते वक्त्रं त्वद्वक्त्रमिव पङ्कजम् ॥
सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः ।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥

**इति क्रमेणोदाहरणे ।**

## सुधा

शङ्कते—**एवमपीति** । द्वयोः पर्यायेणोपमानोपमेयतावर्णनमुपमेयोपमेति लक्षणे कृतेऽपि

अनवरतकनकवितरणधृतजललवकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥

इति रशनोपमायां पूर्वत्रोपमेयस्योत्तरत्रोपमानत्वकल्पनरूपायां मतिचेष्टयोः पर्य्यायेणोपमानत्वोपमेयत्वयोः सत्त्वादतिव्याप्तिः । यमुपमेयतावच्छेदकावच्छिन्नं प्रति यस्योपमानत्वं तं प्रत्येवोपमेयत्वविवक्षाया दोषाभावात्, मतित्वावच्छिन्नं प्रति भणितेरुपमानत्वम्, तां प्रत्येव भणितेरुपमेयत्वाभावादित्याशयः ।

एनां विभजते—**द्विविधैवेति** । द्वैविध्ये हेतुमाह—**धर्मस्येति** । भेदयोरुदाहरणमाह—**सुगन्धीति** । सुगन्धयुतं नेत्रानन्दजनकं मदिरामदात्ताम्रं त्वद्वक्त्रं कमलमिव, कमलं त्वद्वक्त्रमिव । सुगन्धादेः धर्मस्य मुखादिवृत्तित्वे सम्बन्धैक्यादनुगामित्वात्मकं धर्मसाधारण्यम् ।

द्वितीयमुदाहरति—**सच्छायेति** । सच्छायानि शोभायुतानि अम्भोजानि कमलानि तान्येव वदनानि यासां ता वाप्योऽङ्गना इवाभान्ति ।
सच्छायान्यम्भोजानीव वदनानि यासां ता वाप्य इव यत्राङ्गना आभान्तीत्यन्वयः ।

अत्र वदनाम्भोजयोः बिम्बप्रतिबिम्बभावः । तयोश्च सच्छायत्वरूपो धर्म एक एवोपात्तोऽतः बिम्बप्रतिबिम्बभावस्य वस्तुप्रतिवस्तुभावो विशेषणमिति तद्विवेकः ।

## २—अस्थि-शास्त्र

जातियों का वर्गीकरण करने के लिए अस्थि शास्त्र का अध्ययन अत्यन्त आवश्यक है। जिस प्रकार भाषा-मानियों ने हमारे लिए एक उपादेय सामग्री उपस्थित कर दी है, उसी प्रकार अस्थि शास्त्र वालों ने भी उपयुक्त सामग्री एकत्र की है। परन्तु जिस प्रकार हम अधुनिक भाषा मत के निकाले हुए सारे पक्षों को सत्य नहीं मानते, ठीक वैसे ही हम इस अस्थि-शास्त्र के भी सारे पक्षों को सत्य स्वीकार नहीं करते। पक्ष मनुष्य बुद्धि का फल हैं, और उन में भ्रांति सम्भव है। इतिहास हमें उस भ्रांति के जानने में सहायता करता है।

आर्य लोग सदा से अपने मृतकों को जलाते रहे हैं। हां, जो लोग युद्धों में मारे गए, भूचाल आदि में दब गए, वा कभी नदी आदि में डूब गए, और उनका शव दलदल में फंस कर दब गया, वा कुष्ठ आदि रोगों से मरे, ऐसे लोगों के शव जलाए नहीं जा सके होंगे। पुराने आर्यों के यदि कोई अस्थि पञ्जर मिल सकते हैं, तो वे ऐसे ही शवों के होंगे। पांच सहस्र वा उस से अधिक पुराने मोहेञ्जोदारो नगर में जलाने की ही प्रथा प्रसिद्ध थी।[1] जो दो प्राचीन अस्थि पञ्जर **बयाना** और **स्यालकोट** में से मिले हैं, उनका काल निश्चित नहीं हो सका। परन्तु हैं वे दोनों अत्यधिक पुराने और आधुनिक पञ्जाबी वा आर्य प्रकार के।[2] मोहेञ्जोदारो में अन्य प्रकार के भी पञ्जर मिले हैं। उनके शिर आदिकों को चार प्रकारमें बांटा गया है। परन्तु यह स्मरण रखना चाहिए कि प्राचीन काल के विशुद्ध आर्यदेश **ब्रह्मावर्त्त** और **मध्यदेश** आदि देश ही हैं। इन्हीं देशों के रहने वाले आर्य और विशेष कर ब्राह्मण अपनी मौलिक जातीयता को पवित्र रखते रहे हैं। अन्य देशों के लोग वैसी पवित्रता स्थिर नहीं रख सके। अतः आर्यों के अस्थि-पञ्जरों का यथार्थ अध्ययन करने के लिए हमें ध्यानविशेष से ब्रह्मावर्तादि देशों के प्राचीन ब्राह्मणों के अस्थि-पञ्जर ढूंढने पड़ेंगे। यदि ये मिल जाएं, जोकि बहुत असम्भव है, तो फिर विचार आगे बढ़ सकता है।

## अस्थि-पञ्जरों में विभिन्नता का कारण

पुष्पों, फलों और पशु पक्षियों के दूर देशस्थ और कुछ कुछ भिन्नता रखने वाले प्रकारों में यदि मेल करने से नए और बड़े पुष्प, फल और

---

1—Mohenjo Daro and the Indus Civilization, 1931, pp 79-89

2—Prehistoric India, 1927, pp 378-382.

**एकधर्माश्रयेण परस्परसाम्ये वर्ण्यमाने ह्यनयोरस्मिन् विषये तृतीयः सब्रह्मचारी नास्तीति फलति। कस्यचित् केनचित् सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थसिद्धमपि मुखतो वर्ण्यमानं तृतीय-सदृशव्यवच्छेदार्थं भवतीति हि तत्फलकत्वे बीजम्। न चैतद्धर्म-साधारण्य इव धर्मभेदेऽपि लभ्यते। रजोभिर्गगनस्य भूतलसादृश्य-वर्णनेन भूतलस्य मेघाकारैर्गजैर्गगनसादृश्यस्यार्थतः सिद्ध्यभावात्। अपि च—**

पिता समाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन।
पुत्रस्तथैवाधिकवत्सलेन स तेन पित्रा पितृमान् बभूव ॥

**इति व्यत्यस्तधर्मिबिम्बप्रतिबिम्बकोपमायामतिव्याप्तिः।**

**सुधा**

तृतीयसदृशव्यवच्छेदफलसिद्धेरभावः। उपमेयोपमाभावे चन्द्र इव मुखमित्यत्र मुखे चन्द्रसाम्ये वर्णिते चन्द्रेऽपि मुखसादृश्यमर्थतः सिद्धमि-[मे]व, पुनः मुखमिव चन्द्र इति कथनं तृतीयसदृशनिषेधलाभार्थम्।

प्रधानतया शब्देन तथाप्राप्तस्य पुनर्वचनं तदितरसंख्यापरिहारार्थमिति न्यायप्रवृत्तेः। एतत्सर्वं मनसि निधाय—**एकेति**। यत्रोपमाद्वये एकधर्मसत्त्वम्, तत्र तत्फलमुपमेयोपमा च भवतीति, तदेवाह—**कस्यचिदिति**। धर्मार्थयोर्मध्ये धर्मस्य केनचिद् अर्थादिना श्रीमत्त्वेन सादृश्ये वर्णितेऽर्थस्यापि धर्मेण सादृश्यमर्थात् सिद्धमपि पुनस्तद्वर्णनं शब्देन तत्प्रतिपादनं तृतीयसादृश्यनिषेधकम्। प्रकृते तदभावं प्रतिपादयति—**न चैतदिति**। एतत्तृतीयसदृशनिष्ठरूपं व्यङ्ग्यम्। धर्मस्य साधारणत्वे यथा लभ्यते तथा धर्मभेदे सति न लभ्यते, रजोभिर्गगनस्य भूतलस्य सादृश्यवर्णनेन भूतलस्य मेघतुल्यगजैः गगनसादृश्यस्यार्थात् सिद्धेरभावात्। रजोव्याप्तत्वमेघतुल्यगजव्याप्तत्वधर्मयोर्भिन्नत्वात्। तथा च पूर्वोपमया सिद्धगगन-सादृश्यस्यैवोत्तरोपमया प्रतिपादनात् परस्परोपमात्वस्यैव तत्र सत्त्वादित्याशयः। तथा च परस्परोपमायामतिव्याप्तिः स्यादेवेत्यभिप्रायः। ननु **अलङ्कारसर्वस्वकारमते** रजोभिरित्यादावुपमेयोपमैव, द्वयोः पर्यायेणोपमानोपमेयभाववर्णनमिति तल्लक्षणस्य तत्र समन्वयात्। वाक्यभेदो द्विधा—शाब्दः, आर्थश्च। आद्यः 'रजोभिः' इत्यादेः, [द्वि]तीयः 'तद्वल्गुना' इत्यादाविति तद्व्याख्यानकृदुक्तेश्च। तथा च नातिव्याप्तिः। अतो दूषणान्तरमाह—**अपि चेति**। 'पिता समाराधन' इत्यादौ व्यत्यस्तधर्मिबिम्बप्रतिबिम्बकोपमायामतिव्याप्तिः। स पिता क्षेमधन्वा समाराधन-तत्परेण शुश्रूषापरेण तेन पुत्रेण यथा पुत्री बभूव तथैव स पुत्रो देवानीक आत्मनि अतिवत्सलेन तेन पित्रा पितृमान् बभूवेत्यन्वयः।

योरोप के दिए हैं, वे इस से पहले काल के प्रतीत होते ह।[1]

भारतीय=आर्य लोग सदा से अपने मृतकों को जलाते रहे हैं। यदि आर्य लोग कहीं बाहर से आ कर भारत में बसे होते, तो वे अपने मृतकों को दबाते ही रहते। यदि कहो, कि उन्होंने भारत में आ कर जलाना सीख लिया होगा, तो यह एक क्लिष्ट कल्पना है। भला कितने विजेता मुसलमानों ने गत १००० वर्ष में और कितने पाश्चात्यों ने गत २५० वर्षों में यहां आ कर अपने मृतकों को जलाना सीखा है। यह एक धार्मिक विश्वास की बात है और बदली नहीं जा सकती। मूल धार्मिक विश्वासों में परिवर्तन के लिए एक बहुत लम्बे काल की आवश्यकता है। इस के विपरीत हम जानते है कि लाखों वर्ष पहले हिमालय से ही आर्यों के अनेक समूह संसार में फैले। वे सब अपने मृतकों को जलाते थे। कालान्तर में धर्म परिवर्तन से उन का व्यवहार बदला। परन्तु आर्यावर्त में धर्म की स्थिरता से वह व्यवहार चिरकाल से बना रहा है और आगे बना रहेगा।

वास्तविक याजुष प्रतिज्ञापरिशिष्ट (२८०० पूर्व विक्रम) में लिखा है—

**का प्रकृतिर्ब्राह्मणस्य। मध्यदेशः। कतरो मध्यदेश। प्राग् दशार्णात् प्रत्यक् कांपिल्याद् उदक् पारियात्राद् दक्षिणे हिमवतो गङ्गायमुनयोरन्तरमेके मध्यदेशमित्याचक्षते।**

अर्थात्—कौन मूल स्थान है ब्राह्मण का। उत्तर है मध्यदेश। आगे उस मध्यदेश की सीमाएं बताई है।

पूर्वोक्त वचन कात्यायन के वास्तविक प्रतिज्ञा ग्रन्थ का है। नासिकक्षेत्र वासी श्री अण्णाशास्त्री वारे के ग्रन्थ से इस की प्रतिलिपि हम ने स्वयं अपने हाथ से की थी। ग्रन्थ की तथ्यता आदि की विवेचना हम यथास्थान करेंगे। इस लेख से पता चलता है कि ५००० वर्ष पूर्व भी आर्य विद्वानों का यही मत था कि मध्यदेश ब्राह्मणों का मूलस्थान था।

आर्यावर्तस्थ उसी मध्यदेश आदि के मूल निवासी आर्य हैं कि जिन का वेद से घनिष्ठ सम्बन्ध रहा है। उसी वेद और तत्सम्बन्धी वैदिक वाङ्मय का विस्तृत विवरण आगे लिखा जायगा।

———

1 The Aryans by V G Childe, 1926, p. 145

**प्रशस्तपुत्रवत्त्वं च वस्तुप्रतिवस्तुभावेन बिम्बप्रतिबिम्बभावकरम्बितेन साधारणो धर्मः। पितापुत्रयोस्तु धर्मकोटिनिविष्टयोर्वात्सल्य-भक्त्यतिशयकृतं प्राशस्त्यमनुगतसाधारणधर्म इति पूर्वोदाहरण-सारूप्यात् समुच्चयोपमया पुत्रोऽपि पितृभक्त्या प्रशस्तः, पितापि पुत्रवात्सल्येन प्रशस्त इत्यर्थलाभेऽपि तृतीयसब्रह्मचारि-व्यवच्छेदालाभाच्च। न चात्र इवशब्दद्वयादियुक्तपर्यायद्वयाभावात् पर्यायविशेषणेनैवातिव्याप्तिनिरासः स्यादिति वाच्यम्? वाच्यकक्षायां पुत्रपित्रोरुपमाव्यङ्ग्यकक्षायां पितापुत्रयोरिति पर्यायद्वयसत्त्वात्। न हि पर्यायद्वयस्यापि वाच्यत्वमत्र विवक्षितम्। येनेवशब्दद्वययुक्त-पर्यायद्वयाभावादतिव्याप्तिर्निरस्येत। तथा सति हि व्यङ्ग्योपमेयोप-मासाधारण्यं न स्यादित्युक्तम्।**

**न चात्र धर्मिणोरेवोपमा, धर्मयोस्तु उपमानोपमेयसाधारण्यार्थ-मभेद एव प्रतीयते नोपमेति वाच्यम्—**

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम्।
मया मधुकरेणेव पायम्पायमतृप्यत ॥

सुधा

धर्मिबिम्बप्रतिबिम्बकोपमेत्यर्थः। तत्र हेतुमाह—**पुत्रपित्रोरिति**। धर्मिणोः पुत्रपित्रोरुपमायां बिम्बप्रतिबिम्बभावमिश्रितवस्तुप्रतिवस्तुभावेन प्रशस्तपितृ-मत्त्वप्रशस्तपुत्रवत्त्वात्मकः साधारणो धर्मः। एतद्धर्मकोटिप्रविष्टपितापुत्रयो-र्वात्सल्यभक्त्यतिशयाभ्यां कृतं रचितं यत् प्राशस्त्यं तत्साधारणो धर्म इति पूर्वोदाहरणस्य सच्छायाम्भोजेत्यादिरूपस्य समानरूपत्वात् समुच्चितोपमया यथा पुत्रस्य पितृभक्त्या प्रशस्तत्वं तथा पितुरपि तद्वात्सल्येन प्रशस्ततेत्यर्थस्य लाभेऽपि तृतीय-सदृशनिषेधस्य तत्फलस्य लाभासम्भवान्न लक्ष्यत्वमित्याशयः। अत्राशङ्कते—**न चेति**।

अत्रोदाहरणे इवद्वयाभावेन तदुक्तपर्यायद्वयस्याभावात् पर्यायपदाकथनेनैवाति-व्याप्तेर्निरास इत्याशङ्कार्थः। समाधानमाह—**वाच्येति**। यथापदोपादानवत्यां कक्षायां पुत्रपित्रोरुपमा, तद् [ तथा ] व्यङ्ग्यकक्षायां पितृपुत्रयोरिति पर्यायद्वयस्य विद्यमानत्वादित्यर्थः। किञ्च, इवादिद्वयाभावेऽप्यतिव्याप्तेरसम्भव एव, पर्यायपदे वाच्यत्वस्य विशेषणीभूतस्य लक्षणकरणाभावात्। आक्षेपादिना वाच्यत्वावगतौ तु लक्षणस्य व्यङ्ग्योपमेयोपमासाधारण्यानापत्तेश्च।

पुनराशङ्कते—**न चेति**। धर्मिणोः पुत्रपित्रोरेवोपमाधर्मयोः प्रशस्तपुत्रत्वादि-रूपयोरुपमानोपमेययोः साधारण्यायाभेदस्यैव प्रतीतौ द्वितीयोपमाया असम्भवेन नातिव्याप्तिरित्याशङ्कार्थः। अत्र समाधत्ते—**नलिन्या इति**।

तैत्तिरीय ब्राह्मण मे ऐसा वचन मिलता है—

**वेदिर्देवेभ्यो निलायत। तां वेदेनान्वविन्दन्।**

**वेदेन वेदिं विविदुः पृथिवीम्।** तै० ब्रा० ३।३।९।६९॥

पूर्वोक्त प्रमाणो मे—**अन्वविन्दन्। अविन्दन्। अविन्दन्त।** और **विविदुः**—आदि सब प्रयोग पाणिनीय मतानुसार विद्लृ=लाभे से व्युत्पन्न हुए है। भट्टभास्कर तै० स० के प्रमाण के अर्थ में लिखता है—

**विद्यते=लभ्यते ऽनेनेति करणे घञ्।**

**उञ्छादित्वादन्तोदात्तम्॥**

और तै० ब्रा० के प्रमाण के अर्थ मे वह लिखता है—

**विविदुः=लब्धवन्तः।**[1]

## २—आथर्वण पिप्पलाद शाखा संबन्धी किसी नवीन उपनिषद् अथवा खिल मे

आनन्दतीर्थ ने अपने विष्णुतत्त्वनिर्णय मे वेद शब्द की व्युत्पत्ति दिखाने वाला एक प्रमाण दिया है—

**नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति।**

**तस्मादाहुर्वेदा इति पिप्पलादश्रुतिः॥**[2]

## ३—आयुर्वेद के ग्रन्थों में

क—सुश्रुत संहिता मे लिखा है—

**आयुरस्मिन् विद्यते ऽनेन वा आयुर्विन्दतीत्यायुर्वेदः।**

**सूत्रस्थान** १।१४॥

इस वचन की व्याख्या मे डल्हण लिखता है—

**आयुर् अस्मिन्नायुर्वेदे विद्यते=अस्ति विद्यते=ज्ञायतेऽनेन ·· विद्यते=विचार्यतेऽनेन वा · आयुरनेन विन्दति=प्राप्नोति इति वा आयुर्वेदः।**

सुश्रुत के वचन से प्रतीत होता है, कि सुश्रुतकार करण और अधिकरण दोनो अर्थो मे प्रत्यय हुआ मानता है। और उस का टीकाकार

---

१. तै० स० ३।३।४।७ के भाष्य मे भट्टभास्कर लिखता है—

**पुरुषार्थानां वेदयिता वेद उच्यते।**

२. प्रथम परिच्छेद का आरम्भ।

**व्यक्तिनिरपेक्षवृत्त्यन्तरबोध्या वा भवति, सोपमेयोपमेति पर्यवस्यति।**

**ततश्चोभयविश्रान्तसादृश्योपमायामन्योन्यप्रतियोगिकत्वांशे व्यक्तिः सादृश्यरूपोपमांशे वृत्त्यन्तरमिति तयोः करम्बितत्वान्नातिव्याप्तिशङ्का। सामान्यलक्षणसिध्यर्थं च व्यक्तिवृत्त्यन्तरयोरन्योन्यत्वेन क्रोडीकृतयोर्ग्रहणम्। एवं हि 'तया गृहीतं नु मृगाङ्गनाभ्यः' इत्यत्र वृत्त्यन्तरापेक्षव्यक्तिबोध्यायामनलङ्कारभूतायां व्यक्तिनिरपेक्षवृत्त्यन्तरबोध्यायामलङ्कारभूतायां चोपमायां लक्षणमनुगतं भवति।**

**यद्यपि व्यङ्ग्यायामप्युपमेयोपमायां शब्दस्य सहकारित्वेन तद्गतशक्तेरप्यपेक्षितत्वात् 'खमिव जलं जलमिव खम्' इत्यादौ वाच्यायामपि गम्यसाधारणधर्मायां तस्यां धर्मांशे व्यक्तेरपेक्षितत्वात् परस्परनैरपेक्ष्य-**

**सुधा**

व्यञ्जनानिरपेक्षशक्तिबोध्या वा भवति, सा उपमेयोपमेति पर्यवसितोऽर्थः।

"व्युष्टं प्रयाणं च वियोगवेदनाविदूननारीकमभूत् समं तदा" इत्युभयविश्रान्तसादृश्योपमायामन्योन्यप्रतियोगितांशे व्यञ्जना, सादृश्योपमांशे शक्तिरिति तयोरेकत्र मिलितत्वान्नातिव्याप्तिः। वृत्त्योर्भिन्नविषयतया एव विलक्षणत्वात्, विकल्पार्थकवाशब्देन परस्परनिरपेक्षवृत्तिबोध्यत्वस्यैव लाभाच्च। सामान्यलक्षणस्य सर्वत्र व्यापकलक्षणस्य सिद्धये परस्परमेकीकृत्य गृहीतयोर्वृत्त्योर्ग्रहणाच्च। तथैवोभयत्र लक्षणसमन्वयं दर्शयति—**एवं हीति**।

प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या।

तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः॥ इति श्लोकशेषः।

प्रवाते प्रभूतवातस्थले यन्नीलोत्पलं निर्विशेषं निर्भेदं तत्सदृशमित्यर्थः। अधीरविप्रेक्षितं चकितविलोकनम्, आयताक्ष्या विशालनेत्रया तया पार्वत्या मृगाङ्गनाभ्यो हरिणीभ्यो गृहीतमभ्यस्तम्, अथवा मृगाङ्गनाभिस्ततः पार्वत्याः। "पञ्चम्यास्तसिल्"। गृहीतमभ्यस्त नु इत्यन्वयः।

अत्र शक्तिनिरपेक्षव्यञ्जनावृत्तिबोध्यानलङ्कारभूतोपमेयोपमायामन्योन्यप्रतियोगित्वविशिष्टशक्तिनिरपेक्षव्यञ्जनाबोध्यैकधर्मप्रयोज्याया उपमाया अत्र सत्त्वाल्लक्षणसमन्वयः। 'सुगन्धि नयनानन्दि' इत्यादावलङ्कारभूतोपमायामन्योन्यप्रतियोगिकत्वविशिष्टसादृश्यविषयव्यञ्जनानिरपेक्षशक्तिबोध्यैकधर्मप्रयोज्याया उपमायाः सत्त्वाल्लक्षणानुगतिरित्यर्थः।

नन्वेतन्न संभवति, अर्थस्य व्यञ्जकत्वे तु शब्दस्य सहकारिता इत्युक्त्या व्यङ्ग्योपमेयोपमायां शक्तेः सहकारितया अपेक्षितत्वात्। वाच्योपमेयोपमायाम् "खमिव जलं जलमिव खम्" इत्युपमेयोपमायां धर्मस्य गम्यत्वेन तदंशकथने व्यञ्जनाया अपेक्षितत्वाद् वृत्त्योर्निरपेक्षत्वस्य सर्वथाऽसम्भवादित्याशङ्कते—**यद्यपी-**

व्युत्पाद्यते च वेदशब्द । विदन्त्यनन्यप्रमाणवेद्य धर्मलक्षणमर्थ-मस्मादिति वेद. । तच्च वेदनमेकैकस्माद्वाक्याद् भवति ।

### ७—आपस्तम्बपरिभाषा-भाष्य में

आप० सूत्र १।३३ के भाष्य मे कपर्दी स्वामी लिखता है—

**नि श्रेयसकराणि कर्माण्यावेदयन्ति वेदा ।**

और सूत्र १।३ की वृत्ति मे हरदत्त लिखता है—

**वेदयतीति वेद ।**

### ८—ऋग्वेदादि-भाष्य भूमिका मे

दयानन्दसरस्वती स्वामी ने अपनी ऋग्वेदादिभाष्यभूमिका मे लिखा है—

**विदन्ति जानन्ति विद्यन्ते भवन्ति, विन्दन्ति अथवा विन्दन्ते लभन्ते, विन्दन्ति विचारयन्ति, सर्वे मनुष्या. सर्वा. सत्यविद्या यैर्येषु वा तथा विद्वासश्च भवन्ति ते वेदा ।**

इस प्रकार विदित होता है कि काठकादि सहिताओ के काल से लेकर वर्तमानकाल तक १—विद्=ज्ञाने, २—विद्—सत्तायाम्, ३—विद्लृ= लाभे, ४—विद् विचारणे, इन चार धातुओ मे से किसी एक वा चारो से करण अथवा अधिकरण में प्रत्यय हुआ मान कर विद्वान् वेद शब्द को सिद्ध करते आए है। तथा कई ग्रन्थकार भाव मे प्रत्यय मान कर भी वेद शब्द को सिद्ध करते है।

स्वामी हरिप्रसाद अपने वेदसर्वस्व के उपोद्घात मे अधिकरण अर्थ मे प्रत्यय मानना और सत्ता, लाभ तथा विचार अर्थ वाले विद् धातु से व्युत्पत्ति मानना असम्भव या निरर्थक समझते है। पूर्वोक्त प्रमाण समूह से यह पक्ष युक्तिशून्य प्रतीत होता है।

जिस वेद शब्द की व्युत्पत्ति का प्रकार पूर्व कहा गया है, वह वेद शब्द वेद-सहिताओ के लिए प्रयुक्त हुआ है। कहीं कहीं भाष्यकारो ने उस से दर्भमुष्टि आदि अर्थ का भी ग्रहण किया है। परन्तु इस अर्थ वाले वेद शब्द से हमे यहा प्रयोजन नहीं।

वेद-सहिता अर्थ वाले वेद शब्द को व भाष्यकार अन्तोदात्त समझते है। वेद शब्द से हमारा अभिप्राय यहा मन्त्र-सहिताओ से है। अनेक विद्वान्

**इदं तूपमेयोपमात्वप्रयोजकं लक्षणम्। अनुगतानतिप्रसक्त-लक्षणं तु—**

सदृशस्य तृतीयस्य व्यवच्छेदाय यद्भवेत्।
अन्योन्येनोपमेयत्वं सोपमेयोपमा मता॥

**इति द्रष्टव्यम्।**

**अत्रान्योन्येनेति विशेषणम् 'अहमेव गुरुः सुदारुणानाम्' इति प्रतीपविशेषव्यावृत्त्यर्थम्।**

**सुधा**

यस्तु — उपमेयोपमायामौचित्यबलादुपमानोपमेयसादृश्यवाचकपदानामुभयत्रैक्यस्य विवक्षा आवश्यकी।

अन्यथा सहृदयहृदयोद्वेजकतया (ह्य)दोषत्वापत्तेः। क्रमेण यथा—

वदनं कमलायते तदीयं शतपत्रं वदनायते मृदत्याः।
असितोत्पलमालिकन्त्यपाङ्गा नयनान्तन्यसितोत्पलस्य मालाः॥

इत्यादिविशेषरूपो बोध्यः। लक्षणमुपसंहरति—**इदन्त्विति**। अन्योन्येत्यादि-पूर्वमुक्तं लक्षणमुपमेयोपमात्वरूपं यत्सामान्यं तत्प्रयोजकमित्यर्थः। अलङ्कारता-साधारणं तद्विशेषलक्षणमवतारयति—**अनुगतेति**।

अलङ्कारवृत्तितदसाधारणलक्षणं तु इदं द्रष्टव्यमित्यन्वयः। तृतीयसादृश्यव्यवच्छेद-फलकमुपमानोपमेययोरन्योन्यप्रतियोगित्वविशिष्टोपमारूपं यत्, सा उपमेयोपमेति लक्षणस्वरूपं बोध्यम्।

अत्रान्योन्यस्येति पदस्य फलं विचारयति—**अत्रेत्यादि**।

अहमेव गुरुः सुदारुणानामिति हालाहल तात मास्म दृप्यः।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम्॥

इति प्रतीपभेदेऽतिव्याप्तिवारणाय **अन्योन्येति** विशेषणम्।

अत्र हालाहलस्य दुर्जनवचनसाम्यप्रतिपादने तेषामपि तेनार्थतः साम्यसिद्धौ तत्सदृशतृतीयस्य निषेधविषयतयोपमासत्त्वेन लक्षणसमन्वयेऽपि यथा—'धर्मोऽर्थ इव पूर्णश्रीः' इत्यादौ सादृश्यप्रतियोगित्वमर्थस्योत्तरत्रसादृश्यप्रतियोगित्वम्, तथा चोपमानोपमेययोरन्योन्यप्रतियोगित्वं सिद्धम्। अत्र तथा प्रतियोगिकत्वाभावान्नाति-व्याप्तिरिति दिक्।

यत्त्वत्र पूर्वलक्षणमुद्दिश्य—

अहं लतायाः सदृशीत्यखर्वं गौराङ्गि गर्वं न कदापि यायाः।
गवेषणेनालमिहापरेषामेषापि तुल्या तव तावदस्ति॥

इत्यत्रान्योन्यप्रतियोगिकत्वविशिष्टाया उपमायास्तनुत्वादिरूपैकधर्मप्रयोज्यायाः शक्त्या बोधनादुपमेयोपमात्वापत्तेः। न चेदं लक्ष्यमेवेति वाच्यम्? उत्तरोपमाया

# सप्तम अध्याय

## क्या पहले वेद एक था और द्वापरान्त में वेदव्यास ने उस के चार विभाग किए

आर्यावर्तीय मध्य-कालीन अनेक विद्वान् लोग ऐसा मानते थे कि आदि मे वेद एक था। द्वापर तक वह वैसा ही चला आया और द्वापर के अन्त मे व्यास भगवान् ने उसके चार अर्थात् ऋग्वेद, यजुर्वेद, सामवेद, और अथर्ववेद, विभाग किए।

### पूर्व पक्ष

देखिए मध्य-कालीन ग्रन्थकार क्या लिखते है—

१—महीधर अपने यजुर्वेद-भाष्य के आरम्भ मे लिखता है—

**तत्रादौ ब्रह्मपरम्परया प्राप्त वेद वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तत्कृपया चतुर्धा व्यस्य ऋग्यजु सामाथर्वाख्यांश्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्य क्रमादुपदिदेश।**

अर्थात्—वेदव्यास को ब्रह्मा की परम्परा से वेद मिला और उसने उस के चार विभाग किए।

२—महीधर का पूर्ववर्ती भट्टभास्कर अपने तैत्तिरीय सहिता भाष्य के आरम्भ मे लिखता है—

**पूर्व भगवता व्यासेन जगदुपकारार्थमेकीभूयस्थिता वेदा व्यस्ता शाखाश्च परिच्छिन्ना।**

अर्थात्—भगवान् व्यास ने एकत्र स्थित वेदो का विभाग कर के शाखाए नियत की।

३—भट्टभास्कर से भी बहुत पहले होने वाला आचार्य दुर्ग निरुक्त १।२० की वृत्ति मे लिखता है—

**वेदं तावदेक सन्तमतिमहत्त्वाद् दुरध्येयमनेकशाखाभेदेन समाम्नासिषु। सुखग्रहणाय व्यासेन समाम्नातवन्त।**

अर्थात्—वेद पहले एक था, पीछे व्यास रूप मे उस की अनेक शाखाए समाम्नान हुई।

**तद्विशेष्यत्वे यथा—**

वक्त्रं पद्ममिवैतस्या नेत्रं भृङ्गमनोहरम् ।
पद्मं वक्त्रमिवाभाति भृङ्गलोचनभूषितम् ॥

**एतानि पर्यायोपमेयोपमोदाहरणानि ।**

**युगपदुपमेयोपमोदाहरणं तु—'तद्वल्गुना युगपदुन्मिषितेन' इत्यादि ।**

**तत्रापि यथासम्भवं पूर्वोक्ता भेदा उन्नेयाः ।**

**इति चित्रमीमांसायामुपमेयोपमाप्रकरणम् ।**



## सुधा

वस्तुप्रतिवस्तुभावरूपो विशेषणतया निर्दिष्टः ।

विशेष्यतया यथा—**वक्त्रमिति** । एतस्या मुखं पद्ममिव नेत्रे भृङ्गाविव ताभ्यां मनोहरं वक्त्रं कमलमिवाभाति । कमलं भृङ्गाविव लोचने ताभ्यां मनोहरं मुखमिव आभातीत्यन्वयः ।

अत्र भृङ्गनेत्रादीनां बिम्बप्रतिबिम्बभावः । तस्य च भानरूप एक एव धर्मो विशेष्यतया प्रोक्तः । एतेषामुदाहरणानां पर्य्यायोपमेयोपमात्वं बोध्यम् ।

युगपदुपमेयोपमोदाहरणं तु 'तद्वल्गुना' इत्यादिरूपं बोध्यम् ।

उदाहरणान्युपसंहरति—**तत्रापीति** ।

पूर्वोक्ता भेदा धर्मकृताः, श्रौत्यार्थीत्वकृताश्च । **यथासम्भवमिति** । ते यथा—

तत्रानुगामितया यथा—

त्वन्नयनमुत्पलमिव त्वन्नयनमिवोत्पलं कान्ते ।
विद्रुम इव त्वदधररत्वदधर इव विद्रुमः शोणः ॥

पूर्वार्धे आर्थः, उत्तरार्धे शाब्द इति भेदः ।

बिम्बप्रतिबिम्बभाववस्तुप्रतिवस्तुभावौ मिलितावेवोदाहृतौ ।

उपचारो यथा—

अचला इव विद्वांसो विद्वांस इव अचला गुरवः ।
शास्त्राणि तोयनिधिवत्तोयनिधिः शास्त्रवद्बहुगम्भीरः ॥ इति ।

अत्र गुरुत्वगम्भीरत्वयोर्विद्वच्छास्त्रेषूपचारः ।

समासभेदो यथा—

उल्लसितकुसुमहस्ता रमणीयस्तबकवक्षोजा ।
वल्लिरिव वामनयना विभाति वल्ली च वामनयनेव ॥

**तैमें कृत स्वस्त्ययनमिन्द्रो मे शर्म यच्छतु ॥**

अथर्व० ११।६।१२॥

यहां भी **वेदा** बहुवचनान्त पद आया है। इस मन्त्र पर भाष्य करते हुए आचार्य सायण लिखता है—

**वेदा साङ्गाश्चत्वार ।**

अर्थात्—इस मन्त्र म बहुवचनान्त वेद पद से चारो वेदो का अभिप्राय है।

३—पुनरपि तैत्तिरीय सहिता मे एक मन्त्र आया है—

**वेदेभ्य स्वाहा** ॥७।५।११।२॥

४—यही पूर्वोक्त मन्त्र काठकसहिता ५।२ मे भी मिलता है।

इन प्रमाणा से ज्ञात होता है कि प्राचीनतम काल से वेद अनेक चले आए हैं।

## ब्राह्मण ग्रन्थो का मत

इस विषय मे ब्राह्मणो की भी यही सम्मति है। इतना ही नहीं, उन मे तो यह भी लिखा है कि चारा वद आदि से ही चले आ रहे ह। माध्यन्दिन शतपथ ब्राह्मण काण्ड ११ के स्वाध्याय प्रशसा ब्राह्मण के आगे आदि से ही अनेक वेदो का होना लिखा है। ऐसा ही ऐतरेयादि दूसरे ब्राह्मणा मे भी लिखा है।

१—कठब्राह्मण मे लिखा है—

**चत्वारि शृङ्गा इति वेदा वा एतदुक्ता ।**[1]

अर्थात्—चत्वारि शृङ्गा प्रतीक वाले प्रसिद्ध मन्त्र मे चारो वेदा का कथन मिलता है।

पुन.—

२—काठक शताध्ययन ब्राह्मण के आरम्भ के ब्रह्मौदन प्रकरण मे अथर्ववेद की प्रधानता का वर्णन करते हुए चार ही वेदों का उल्लेख किया है—

**· आथर्वणो वै ब्रह्मण समान: · चत्वारो हीमे वेदास्तानेव भागिन करोति, मूल वै ब्रह्मणो वेदा, वेदानामेतन्मूल, यदृत्विज प्राश्नन्ति तद् ब्रह्मौदनस्य ब्रह्मौदनत्वम् ।**

---

१ वै० वा० का इतिहास द्वितीय भा० पृ० २६६। पुराना सस्करण।

# अथानन्वयनिरूपणम्

**एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः ।**

**एवकारबलादेकस्यामेवोपमितिक्रियायामिति गम्यते । तेनोपमेयोपमायां रसनोपमायां च नातिव्याप्तिः । उदाहरणम्—"गगनं गगनाकारं सागरः सागरोपमः" अयं प्रतीयमानधर्मः । निर्दिष्टधर्मो यथा—**

न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः ॥

सुधा

एवमुपमितिक्रियानिष्पत्तिसत्त्वेनोपमाविशेषरूपामुपमेयोपमां निरूप्य तदभाववत्त्वेनोपमातिरिक्तमनन्वयं निरूपयितुं प्रतिजानीते—**अथेति** । उपमाविशेषोपमेयोपमाकथनानन्तरमित्यर्थः । तस्य प्राचीनोक्तं लक्षणं प्रथमं प्रतिपादयति—**एकस्यैवेति** । एकस्यैवोपमानत्वमुपमेयत्वं चेद्भवति, सोऽनन्वय इत्यर्थः । एवेत्यस्य प्रयोजनमाह—**एवकारबलादिति** । एकस्यामेवोपमितिक्रियायां तादृशवर्णनमित्यर्थः । तत्प्रयोजनमाह—**तेनेति** । उपमेयोपमायाम् 'खमिव जलं जलमिव खम्' इत्यादिरूपाया रसनोपमायाम् 'भणितिरिव मतिर्मतिरिव चेष्टा' इतिरूपायाञ्च नातिव्याप्तिः, एकस्या एवोपमितिक्रियाया उभयत्राप्यभावादित्याशयः । उदाहरणकथनद्वारा तद्विभागमाह—**उदाहरणमिति** ।

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥

इति पद्यशेषः । अत्रैकस्यैव गगनादेरुपमानत्वमुपमेयत्वञ्च । अत्र वैपुल्यगाम्भीर्यदारुणत्वानां धर्माणां वाच्यत्वाभावादस्य प्रतीयमानधर्मत्वम् ।

निर्दिष्टधर्मो यथा—**न केवलमिति** । नितान्तकान्तिः सा नितम्बिनी एव केवलं नितम्बिनीव न भाति, यावद्विलासायुधः कामः, तस्य लास्यं नृत्यं तन्निवासास्ते तस्या विलासास्तद्विलासा इव भान्तीत्यन्वयः ।

अत्र प्रकाशनरूपधर्मस्य शक्त्या प्रतिपाद्यत्वान्निर्दिष्टधर्मत्वम् । अत्र धर्मस्यानुगामित्वमेव, न बिम्बप्रतिबिम्बभावापन्नता । तथाधर्मोक्तौ किञ्चिद् धर्मावच्छिन्नत्वेन धर्मान्तरावच्छिन्ने स्वस्मिन् सादृश्यान्वये बाधकाभावादुपमात्वापत्तावनन्वयस्य विलोपापत्तेः ।

वैदिक देवतावाद मे ऐसे स्थानो पर 'देव' का अर्थ विद्वान् मनुष्य भी होता है। अत पहले सर्वत्र अधिष्ठातृ देवता का विचार करना, पुन वैदिक ग्रन्थो की तदनुसार सगति लगाना क्लिष्टकल्पना मात्र है। अत अलमनया क्लिष्टकल्पनया।

ब्रह्मा आदि सृष्टि का विद्वान् मनुष्य है, इस अर्थ मे मुण्डकोपनिषद् का प्रथम मन्त्र भी प्रमाण है—

**ब्रह्मा देवानां प्रथम सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता।**
**स ब्रह्मविद्या सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥**

यहा पर भी शङ्कर वा उस के चरण चिन्हो पर चलने वाले लोग **देवानां** पद के आ जाने से ब्रह्मा को मनुष्येतर मानते है। पर आगे 'ज्येष्ठपुत्राय' पद जो पढा गया है, वह उन के लिए आपत्ति का कारण बनता है। क्योकि अधिष्ठाता ब्रह्मा के पुत्र ही नही है, तो उन मे से कोई ज्येष्ठ कैसे होगा ?[1] इस लिए पूर्व प्रमाण मे ब्रह्मा को मनुष्येतर मानना युक्तियुक्त नही। इसी ब्रह्मा को आदि सृष्टि मे अग्नि आदि से चार वेद मिले।

## (ख) श्रीगोविन्द की व्याख्या

वेदान्त सूत्र १।३।३० के शाकरभाष्य की व्याख्या करते हुए श्रीगोविन्द लिखता है—

**पूर्व कल्पादौ सृजति तस्मै ब्रह्मणे प्रहिणोति=गमयति=तस्य बुद्धौ वेदानाविर्भावयति।**

यहा भी चाहे उस का अभिप्राय अधिष्ठातृदेवता से ही हो, पर वह भी वेदो का आरम्भ म ही अनेक होना मानता है।

## (ग) आनन्दगिरीय व्याख्या

इस सूत्र के भाष्य पर आनन्दगिरि लिखता है—

**विपूर्वो दधाति करोत्यर्थः। पूर्व कल्पादौ प्रहिणोति ददाति।**

आनन्दगिरि भी ब्रह्मा को ही वेदो का मिलना मानता है।

दूसरे स्थल पर जो शङ्करादिको ने यह प्रमाण उद्धृत किया है, वहा पर भी हमारे प्रदर्शित अभिप्राय से उस का कोई विरोध नही पडता। यही

---

१ यद्यपि जड पदार्थो मे भी कारणकार्य भाव से पुत्र आदि शब्द का प्रयोग देखा जाता है, परन्तु यहा अथर्वा जडपदार्थ नही है।

समुच्चयोपमया तस्य धर्मार्थकामेष्वनुजेषु च समवृत्तिमात्रस्यैव प्रतिपाद्यतया सदृशान्तरव्यवच्छेदे तात्पर्याभावात्। तथा "त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव" इत्यत्राप्यस्ति स्वस्यैवोपमानत्वमुपमेयत्वं च। तत्रापि नानन्वयः। पितृनियोगात् क्षितित्याग इवापवादात् सीतात्यागे च सदृशान्तरप्रसक्त्यभावेन तद्व्यवच्छेदस्य फलत्वायोगाच्च।

एवम्—

> उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम्।
> स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे॥

इत्यादावप्येकस्यैवोपमानोपमेयभावः स्पष्टः। न चैतेषु क्वचिद्धर्मादिषु वृत्तेरवरजेषु वृत्तेश्चोपमानोपमेयभावः। अन्यत्र क्षितित्यागस्य सीतात्यागस्य चापरत्र गङ्गापतनस्य दुकूलसंनिधानस्य च, न तु क्वचिदप्येकस्यैव धर्मिण उपमानोपमेयभावः। विशिष्टान्वयिनोऽपि

सुधा

न चेति। अनन्वयस्त्वत्र नास्ति, समुच्चयोपमया धर्मादिषु भ्रातृषु च रामस्य समवृत्तित्वमात्रस्यैव प्रतिपाद्यतया द्वितीयसदृशनिषेधे तात्पर्याभावात्। तस्मात् समुच्चयोपमायामतिव्याप्तिरित्याशयः। दूषणान्तरमाह—त्यक्ष्यामीति। 'तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः' इति पूर्वार्धम्। तस्य वर्ण्यस्यापवादस्येत्यर्थः। अपनोदाय फलप्रवृत्तौ अपत्योत्पत्तावुपस्थितायां सत्यामपि निर्व्यपेक्षः निस्स्पृहः सन् वैदेहसुतां पुरस्तात् पूर्वं पितुराज्ञया समुद्रो नेमिरिव नेमिर्यस्याः सा, तां भूमिमिव त्यक्ष्यामीत्यन्वयः। अत्र रामस्यैवोपमानत्वम्, उपमेयत्वम्। न चात्रानन्वयोऽस्ति, द्वितीयसदृशनिषेधतात्पर्याभावात्।

पित्राज्ञया क्षितित्याग इवापवादात् सीतात्यागेऽप्यहं भवता न निषेद्धव्य इत्येतावति श्लोकस्य तात्पर्यसत्त्वात्। द्वितीयसादृश्यप्रसिद्धिरपि नास्तीत्याह—पितृनियोगादिति। पित्राज्ञया राज्यत्यागे, निन्दाभयात् सीतात्यागे च, अन्यस्य सदृशपदार्थस्याभावेन तन्निषेधस्य फलत्वासम्भवाच्च।

दूषणान्तरमाह—एवमिति। 'उपाददे तस्य' इत्यादौ शिवस्यैवोपमानोपमेयतासत्त्वादतिव्याप्तिः। अत्राशङ्कते—न चेति। धर्मादिषु वृत्तेरवरजेषु वृत्तेश्चोपमानोपमेयभावः। क्षितित्यागस्य च तत्त्वमस्तु, न तु क्वचिदप्येकस्यैव धर्मिणो रामादेस्तत्त्वम्, विशिष्य बोधे विशिष्टान्वयिनो विशेषणसङ्क्रमस्यौचित्यात्।

आधुनिक सभ्यता वालों को भला प्रतीत नहीं होता, परन्तु इन कारणों से सकल इतिहास पर अविश्वास करना आग्रहमात्र है।

कृष्णद्वैपायन वेदव्यास एक ऐतिहासिक व्यक्ति था। उसी के शिष्य प्रशिष्यों ने ब्राह्मणादि ग्रन्थों का सङ्कलन किया। उसी ने महाभारत रचा। उसी के पिता पितामह पराशर, शक्ति आदि हुए हैं। वह आर्यज्ञान का अद्वितीय पण्डित था। उस को कल्पित कहना इन विदेशीय विद्वानों की ही धृष्टता है।[1] ऐसा दुराग्रह संसार की हानि करता है, और जनसाधारण को भ्रम में डालता है।

हम अगले प्रमाण महाभारत से ही देंगे। हमारी दृष्टि में यह ग्रन्थ वैसा ही प्रामाणिक है, जैसा संसार के अन्य ऐतिहासिक ग्रन्थ। नहीं, नहीं, यह तो उन से भी अधिक प्रामाणिक है। यह इतिहास ऋषिप्रणीत है। हां, इस के थोड़े से साम्प्रदायिक भाग नवीन हैं।

क—महाभारत शल्यपर्व अध्याय ४१ में कृतयुग की एक वार्ता सुनाते

---

1 a—In other words, there was no one author of the great epic, though with a not uncommon confusion of editor with author, an author was recognized called Vyasa Modern scholarship calls him The Unknown, Vyasa for convenience
W Hopkins, The Great Epic of India, p, 58
but this Vyasa is a very shadowy person Infact his name probably covers a guild of revisors and retellers of the tale
W Hopkins India Old and New, p 69

b—Badarayana is very loosely identified with the legendry person named Vyasa
Monior Williams, Indian Wisdom, p 111, footnote 2

c—Tradition invented as the name of its author the designation Vyasa ('arranger')
A A Macdonell, India's Past p 88
To Ramanuja the legendry Vyasa was the seer
A A Macdonell, India's Past p 149

d—Vyasa Parasarya is the name of a mythical sage
A A Macdonell & A, B Keith, Vedic Index p 339

इसी विषय में योरोपीय लेखकों का अधिक प्रलाप हमारे 'भारतवर्ष का बृहद् इतिहास' प्रथम भाग, पृष्ठ २८४ पर देखिए।

स्वस्य स्वेनेति विशेषणादुपमेयोपमायां रसनोपमायां च नातिव्याप्तिः। अनुगाम्येकधर्मिकेति विशेषणादुदाहृतोपमाविशेषेषु नातिव्याप्तिः।

यद्यपि तेष्वपि समां वृत्तिं प्रपेदे इत्याद्यंशेऽनुगामिधर्मप्रवेशः, तथाप्येको न भवति। धर्मार्थकामावरजादिबिम्बप्रतिबिम्बभावकरम्बितत्वात्। अत एवैकग्रहणमप्यर्थवत्।

अन्वर्थनामधेय इति तु न लक्षणान्तर्गतम्। किन्तु स्वेन स्वस्योपमाप्यनुगाम्येकधर्मा चेद्देवानन्वयो नान्यथेत्यत्रोपपत्तिमात्रपरम्। धर्मैक्ये हि स्वस्य स्वेनोपमा नान्वेतीत्यनन्वय इत्यन्वर्थं नाम भवति। अनन्वय्यर्थनिबन्धनवशाच्चानुपमत्वद्योतनफलपर्यन्तं धावेत्। धर्मभेदे तु एकधर्मावच्छिन्नेन स्वेनैव धर्मान्तरावच्छिन्नस्य स्वस्योपमान्वेतीति, न तत्रान्वर्थं नाम, न चानन्वय्यर्थनिबन्धनाधीनानुपमत्वफललाभः।

## सुधा

स्वस्य स्वेनोपमा स्यात्, स अनन्वय इति योजना। कीदृशोऽन्वर्थनामधेय इत्यन्वयः। 'धर्मोऽर्थ इव पूर्णश्रीः' इत्याद्युपमेयोपमायाम्, 'भणितिरिव मतिः' इति रसनोपमायामतिव्याप्तिवारणाय स्वस्य स्वेनेति। पूर्वोदाहृतोपमाविशेषेष्वतिव्याप्तिवारणायानुगाम्येकधर्मेत इति।

यद्यपि 'तेष्वपि समां वृत्तिं प्रपेदे' इत्याद्यंशेऽनुगामिधर्मस्तथा न स एवैकः, धर्मार्थकामावरजाद्यंशे बिम्बप्रतिबिम्बभावसत्त्वात्। अनुगामिपदम् उपलक्षणपरम्। तेनान्यस्यापि धर्मस्य शुद्धतैव ग्राह्या, न त्वन्यमिश्रा। एतदर्थज्ञापनायैवैकपदम्।

अन्वर्थेत्यादिविशेषणस्य प्रयोजनमाह—**अन्वर्थनामधेयोऽयमिति**। अस्य न लक्षणान्तर्गतत्वम्, किन्तु नियमार्थत्वम्। तन्नियमाकारमाह—"स्वेन स्वस्योपमाप्यनुगतैकधर्मवती चेत्तदैवानन्वयो नान्यथेति। धर्मस्यैकत्वे स्वस्य स्वेनोपमा नान्वेतीत्यनन्वय इति यौगिकं नाम भवति। तच्च नामानन्वयिनोऽप्यर्थस्य यन्निबन्धनं रचना, तद्बलेनानुपमत्वद्योतनरूपं यत् फलं तत्पर्यन्तं तात्पर्यं धावति।

धर्मभेदे बिम्बप्रतिबिम्बाद्यवेकधर्मावच्छेदेन स्वेनैव धर्मान्तरावच्छिन्नस्य स्वस्योपमान्वयादुपमैव। न तत्रान्वर्थोऽनन्वयः, अनन्वय्यर्थस्य यन्निबन्धनं तदधीनानुपमत्वफललाभस्याभावाच्च।

ग और अगला प्रमाण मित्रवर श्री सुखथङ्कर के प्रामाणिक सस्करण से दिए गए हे । इस का अभी तक आदि पर्व ही मुद्रित हुआ है, अत अगले पवा के लिए हम इसे देख नहीं सके ।[1]

महाभारत आदिपर्व मे **शकुन्तलोपाख्यान** प्रसिद्ध है । राजर्षि दुष्यन्त काश्यप कण्व के अत्यन्त सुरम्य आश्रम मे प्रवेश कर रहे हे । उस समय का चित्र भगवान् द्वैपायन ने खीचा है । देखो अध्याय ६४ मे लिखा है—

**ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणा पदक्रमै ।**
**शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु ॥३१॥**
**अथर्ववेदप्रवरा पूययाज्ञिकसमता ।**
**सहितामीरयन्ति स्म पदक्रमयुतां तु ते ॥३३॥**

अर्थात्—ऋग्वेदियो मे श्रेष्ठ-जन पद और क्रम से ऋचाए पढ रहे थे । और अथर्ववेद मे प्रवीण विद्वान् पद, क्रमयुक्त सहिता को पढते थे ।

यह कैसा स्पष्ट प्रमाण है । इस म स्पष्ट लिखा है कि व्यास जी से सहस्रो वर्ष पूर्व महाराज दुष्यन्त के काल मे भी अथर्ववेद की सहिता पद और क्रम सहित पढी जाती थी । यह उस काल का वर्णन है जब वेदो की सम्प्राप्त शाखाए न बनो थी, परन्तु जब मन्त्रो के व्याख्यारूप पाठान्तर आर्यावर्त के अनेक गुरुकुलो मे प्रसिद्ध थे, तथा जब ब्राह्मण आदि ग्रन्था की सामग्री भी अनेक आचार्य-परम्पराओ मे एकत्र हो चुकी थी ।

इन्ही वेदो की पाठान्तर आदि व्याख्या होकर अनेक शाखाए बनी । तब ये वेद किसी प्रवक्ता ऋषि के नाम से प्रसिद्ध नही थे । ये ही वेद सनातन काल से चले आए हैं । व्यास जी ने अनेक ऋषि मुनियो की सहायता से उन पाठान्तरा को एकत्र करके वेद-शाखाए बनाई, और ब्राह्मण ग्रन्थो की सामग्री को भी क्रम देकर तत् तत् शाखानुकूल उन का सकलन किया । कई लोग ब्राह्मणादिको को भी वेद कहते थे, अत उन्होने यही कहना आरम्भ कर दिया कि व्यास जी ने ही वेदो का विभाग किया । वेदव्यास जी ने तो ब्राह्मण आदि का ही विभाग किया था । वेद तो सदा से चले आए हैं । वस्तुत पुराणों मे भी इस के विपरीत नही कहा गया । वहा भी यही लिखा है कि वद आरम्भ से ही **चतुष्पाद** था, अर्थात् एक वेद की चार ही सहिताए थी ।

---

१ इस द्वितीय सस्करण मे आरण्यकपर्वस्थ श्लोक भी मिला लिए गए है ।

**अयमनन्वयो व्यङ्ग्योऽप्यस्ति । यथा—**

अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत्प्रीतिस्तवैवागमनात् पुनः ॥

**सुधा**

तस्यैव दहरत्वम् । तस्य च दहरापेक्षया दहरत्वम् । यावान् वा अयमाकाशस्तावान् वा एषोऽन्तर्हृदय आकाशः, बाह्याभ्यन्तरकृतभेदस्य उपमानोपमेयभावसत्त्वादिति पूर्वपक्षिणा समर्थितम् ।

तत्र सिद्धान्तभाष्यम्—यद्यप्याकाशो भूताकाशे रूढः; तथापि तेनैव तस्योपमानो[नतो]पपद्यत इति भूताकाशाशङ्का निवर्तिता भवति । ननु बाह्याभ्यान्तरत्वकल्पितभेदेनोपमानोपमेयसिद्धिरेति चेन्न, अगतिका हीयं गतिर्यत्काल्पनिकभेदाश्रयणम् । अत्र **वाचस्पतिमिश्राः**—

तेन तस्योपमेयत्वं रामरावणयुद्धवत् ।
अगत्या भेदमारोप्य गतौ तस्यां न विद्यते ॥ इति ।

व्याख्यातं तत्**कल्पतरुकारैः**—ह्यस्तनाद्यतनत्वादिना वा युद्धभेदः क्रियते । एवंविधे स्थले भेदारोपणमूलिकोपमैवेति भवतां भेदविवक्षाभावेन न तत्समत्वम् । किञ्च, "तेन तुल्यम्" [५,१,११५] इति पञ्चमाध्यायसूत्रे भाष्यप्रदीपे 'शयितेन तुल्यं शयितव्यमित्यत्र नास्त्यत्रोपमानोपमेयभावः, यथा—गौरिव गौः इति । येनैव हेतुना एको गौः, तेनापरोऽपीत्युपमानोपमेयभावः' इति कैयटप्रतिपादनविरोधश्चेति चेन्न, भेदविवक्षायामुपमाया अस्माभिरप्यङ्गीकारात् । उपमानान्तरव्यावृत्तावेव तात्पर्येऽनन्वय इत्यत्र तद्विरोधाभावात् । उपमानोपमेयभावो नास्तीति कैयटोक्तावपि सादृश्यपर्यवसानं नास्तीत्यर्थस्यैव लाभाच्च ।

"उपमानानि सामान्यवचनैः" [२,१,५५] इत्यत्र यद्यप्युपमानोपमेययोरैक्यं तदा 'गौरिव गौः' इत्यत्राप्युपमानोपमेयभावः प्राप्नोतीति भाष्यस्याप्येतदभिप्रायकत्वाच्च । आरोपणभेदविवक्षाया लक्षणालभ्यत्वेन तद्भियैवाकाशसाम्यस्य दहराधिकरणे निराकरणाच्च ।

तद्व्यपदेशाच्चेत्यधिकरणे 'श्येनेन यजेत' इत्यत्र गुणविधिपक्षे श्येनशब्दस्य पक्षिविशेषे निरूढतया तस्यैव विधेयत्वापत्तौ 'यथा श्येनो निपत्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यमादत्ते' इत्युपमानोपमेयभावस्यासङ्गत्वापत्तेः । सूत्रस्य स्वसादृश्याभावादिति पूर्वमीमांसायामुक्तेश्चेत्यलम् ।

व्यङ्ग्यमनन्वयमुदाहरति—**यथेति** । 'हे गोविन्द अद्य मम या प्रीतिस्त्वयि

## ३—आम्नाय=नाट्यवेद

नाट्यवेद का भी अपना आम्नाय था। पाणिनि सूत्र ४।३।१२९ पर काशिकावृत्ति में लिखा है—

**नटशब्दादपि धर्माम्नाययोरेव।**

अर्थात्—नट शब्द से भी धर्म और आम्नाय अर्थ में नाट्य शब्द बनता है। यथा भरत नाट्य-शास्त्र।

पाणिनि के उक्त सूत्रानुसार छन्दोगों, औक्थिकों, याज्ञिकों और बह्वृचों के अपने अपने आम्नाय थे।

## ४—आम्नाय=ब्राह्मण

मीमांसा सूत्रों में जैमिनि मुनि आम्नाय पद का बहुधा प्रयोग करता है। उस का एक सूत्र है—

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्** ।१।२।१॥

अर्थात्—(पूर्वपक्षानुसार) आम्नाय अर्थात् ब्राह्मण वचन क्रिया-परक हैं।

यहां आम्नाय पद स्पष्ट ही मीमांसा और याज्ञिकों के मूल ग्रन्थ ब्राह्मण ग्रन्थ का वाची है।

**टिप्पणी**=वर्तमान सम्पूर्ण ब्राह्मणों में जो अनेक वचन लगभग एक समान उपलब्ध होते हैं, वे मूल ब्राह्मण के वचनों के ही विभिन्न प्रवचन हैं।

## ५—आम्नाय=चरण

वैदिक ग्रन्थों में शाखाओं का आदि ग्रन्थ आम्नाय था। उसे चरण कहा गया है। इसी अभिप्राय से कात्यायन मुनि[१] ने ऋक्सर्वानुक्रमणी के आरम्भ में लिखा है—

**अथ श्री ऋग्वेदाम्नाये शाकलके** ...

अर्थात्—शैशिरि आदि शाखाओं का मूल शाकलक आम्नाय था।

महाभारत में इस अभिप्राय को बहुत अधिक स्पष्ट किया है। शान्ति-पर्व अध्याय २६६ में लिखा है—

---

१ यही कात्यायन वाजसनेय प्रातिशाख्य में सूत्र रचता है—'स्याद् वाऽऽम्नायधर्मित्वाच्छन्दसि नियमः' (१।१)। यहां आम्नाय का अर्थ मूल चरण अथवा मूल पार्षद् हो सकता है।

सुधा

तत्रानन्वयध्वनिनैवोपपत्तौ पृथग्गणनस्यायोग्यतैव ।

'आरोपे सति निमित्तानुसरणं न तु निमित्ते सत्यारोपः' इति न्यायात् ।
अन्यथा व्यङ्ग्योपमादीनामपि पृथगलङ्कारतापत्तेरित्यलम् ।

धरानन्देन रचिता व्याख्यानन्वयसम्मता ।
टीकायां चित्रमीमांसासुधायामापि पूर्णताम् ॥

**इति धरानन्दकृतौ चित्रमीमांसाव्याख्यायां
सुधाख्यायामनन्वयप्रकरणव्याख्या
समाप्तिता[ ? ]मगमत् ।**



# नवम अध्याय

## वेद-श्रुति-प्रणाश

प्राचीन ऐतिह्य कुछ ऐसी घटनाओं का साक्ष्य उपस्थित करता है, जिन से पता चलता है कि ससार के कुछ देशों से कभी कभी श्रुति का प्रणाश हुआ और भारतवर्ष मे भी कोई समय इसी प्रकार का आया। इस विषय के वचन आगे लिखे जाते हैं—

१—वाल्मीकीय रामायण किष्किन्धा काण्ड ६।५ मे हनुमान् का वचन है—

**तामहमानयिष्यामि नष्टां वेदश्रुतिमिव।**

अर्थात्—मैं सीता को उसी प्रकार से ले आऊगा जैसे नष्ट हुई श्रुति लाई गई थी।

यह वचन दाशरथि राम से पूर्वकाल की किस घटना का सकेत करता है, यह हम अभी नहीं कह सकते।

### I. कृत युग में श्रुति-प्रणाश और हरि (विष्णु) द्वारा उद्धार

२—महाभारत शान्तिपर्व अ० ३४८ मे भीष्म जी श्वेत द्वीपस्थ नारद और हरि (विष्णु) का एक सवाद सुनाते है। उस मे विष्णु कहता है—

**यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता पुन ।**
**सवेदा सश्रुतिकाश्च कृता पूर्वं कृते युगे ॥५६॥**

अर्थात्—जब वेद श्रुति नष्ट हुई, मुझ से पुन लाई गई, साथ वेद (=ब्राह्मणों) के और साथ श्रुति (=मन्त्रों) के (पूर्ण) की गई। यह बात पहले मैंने कृतयुग मे की।

इसी घटना का वर्णन शान्तिपर्व अ० ३५७ में भी किया है। यथा—

**एतस्मिन्नन्तरे राजन् देवो हयशिरोधर ।**
**जग्राह वेदानखिलान् रसातलगतान् हरि ॥**

अर्थात्—[मधु और कैटभ दानवों के द्वारा] रसातल को ले जाए गए अखिल वेद को हयशिरोधर हरि ने प्राप्त करके ब्रह्मा को दिया।

### II त्रेता के प्रारम्भ मे श्रुति प्रणाश और दत्त द्वारा उद्धार

३—त्रेता के प्रारम्भ मे अत्रि कुल मे दत्त नामक ऋषि उत्पन्न हुआ।

**एकत्र सदृशादर्शनात्तत्सदृशधर्मिका स्मृतिः, इतरत्र सदृशादर्शनात्तत्सदृशलक्ष्मीसम्बन्धिनो जलनिधिमन्थनस्य स्मृतिः; उभयत्रापि सादृश्यमूलकवस्त्वन्तरस्मृतित्वमविशिष्टम्। अत एव सदृशासदृशसाधारण्यार्थतया लक्षणे [1]'वस्त्वन्तरग्रहणमर्थवत्।**

सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि ? हा कुरङ्गनयने चन्द्रानने जानकि ! ॥

## सुधा

मित्यर्थः। पुरस्तादग्रतः अम्भसो जलात् "पञ्चम्यास्तसिल्" [४,३,७] उत्तरन्तीं निष्क्रामन्तीं काञ्चित् स्त्रियं मथ्यमानात् समुद्रात् सद्यो निस्सृतां श्रियमिवोद्वीक्ष्य शौरिः कृष्णः, जलनिधिमन्थनस्य "अधीगर्थदयेशां कर्मणि" [२,३,५२]इति कर्मणि षष्ठी, तन्मन्थनमित्यर्थः। अस्मार्षीत् स्मृतवानिति श्लोकान्वयः।

पूर्वोदाहरणेन सिद्धावपरस्य व्यर्थत्वमाशङ्क्य द्वयोरपि प्रयोजनविशेषवत्तया सार्थकतां प्रतिपादयति—**एकत्रेति**। आद्योदाहरण इत्यर्थः। सदृशादर्शनाद् रुचिरबर्हदर्शनात्तत्सदृशकेशपाशस्मृतिः। इतरत्र = द्वितीय इत्यर्थः। सदृशादर्शनाद् लक्ष्मीसदृशस्त्रीदर्शनाल्लक्ष्मीसम्बन्धिनः समुद्रमन्थनस्य स्मृतिः। लक्षणमुभयत्रानुगमयति—**उभयत्रापीति**। सादृश्यमूलकवस्त्वन्तराश्रितस्मृतेरविशेषाल्लक्षणसमन्वयः। वस्त्वन्तरपदं सदृशासदृशसाधारण्यार्थम्। अत एव तस्य सार्थकत्वमित्यर्थः।

अत्यन्तत्वविशेषणस्य फलमुदाहरति—**सौमित्रे इति**। विरहातुररामस्योक्तिः—हे लक्ष्मण चण्डांशुः सूर्यः, उज्जृम्भते उदयति, ननु तरुतलं सेव्यताम्। लक्ष्मणोक्तिः—हे रघुपते रात्रौ रवेः का वार्ता ? अयं चन्द्र उन्मीलति उदयं गच्छति। पुना रामस्योक्तिः—एतद्भवता कथन्नु कथमिव ज्ञातम् ? यतः कुरङ्गं मृगं धत्त इति लक्ष्मणोक्तिः। हा प्रेयसि मृगाक्षि चन्द्रमुखि हे जानकि त्वं क्वासीति रामोक्तिः।

---

१. **किञ्चिद् वस्तु दृष्ट्वा कुत्रचित् तत्सदृशस्य वस्तुनः स्मरणम्, कुत्रचित्तु तत्सदृशवस्तुनः सम्बन्धिपदार्थस्य यस्य कस्यचित् (असदृशस्यापि) स्मरणम्। उभयत्रापि सादृश्यं मूलं यत्र एतादृशमर्थात् सादृश्यं दृष्ट्वा वस्त्वन्तरस्य स्मरणं भवतीत्याशयः।**

# दशम अध्याय

## अपान्तरतमा और वेद्व्यास

### (त्रेता आरम्भ)

### १—अपान्तरतमा=प्राचीनगर्भ

(क) आचार्य शङ्कर अपने वेदान्तसूत्रभाष्य ३।३।३२ मे लिखते हैं—

**तथा हि—अपान्तरतमा नाम वेदाचार्य पुराणर्षि विष्णुनियोगात् कलिद्वापरयो सन्धौ कृष्णद्वैपायन सबभूव इति स्मरन्ति ।**

अर्थात्—अपान्तरतमा नाम का वेदाचार्य और प्राचीन ऋषि हो कलि द्वापर की सन्धि मे विष्णु की आज्ञा से कृष्ण द्वैपायन के रूप मे उत्पन्न हुआ ।

(ख) इसी सम्बन्ध मे अहिर्बुध्न्यसहिता अध्याय ११ मे लिखा है—

**अथ कालविपर्यासाद् युगभेदसमुद्भवे ॥५०॥**
**त्रेतादौ सत्त्वसकोचाद्रजसि प्रविजृम्भिते ।**
**अपान्तरतमा नाम मुनिर्वाक्सभवो हरे ॥५३॥**
**कपिलश्च पुराणर्षिरादिदेवसमुद्भवः ।**
**हिरण्यगर्भो लोकादिरहं पशुपति शिव ॥५४॥**
**उद्भूत्तत्र धीरूपमृग्यजु सामसकुलम् ।**
**विष्णुसकल्पसंभूतमेतद् वाच्यायनेरितम् ॥५८॥**

अर्थात्—वाक् का पुत्र वाच्यायन अपरनाम अपान्तरतमा था । [कालक्रम के विपर्यय होने से त्रेता युग के आरम्भ में] विष्णु की आज्ञा से अपान्तरतमा, कपिल और हिरण्यगर्भ आदिको ने क्रमश. ऋग्यजु सामवेद, साख्य शास्त्र और योग आदि का विभाग किया ।

अहिर्बुध्न्यसहिता शङ्कर से बहुत पहले काल की है ।

(ग) इस अहिर्बुध्न्यसहिता से भी बहुत पहले के महाभारत शान्तिपर्व, अध्याय ३५६ मे वैशम्पायन जी राजा जनमेजय को कह रहे है—

**अपान्तरतमा नाम सुतो वाक्सभवः प्रभोः ।**
**भूतभव्यभविष्यज्ञ· सत्यवादी दृढव्रतः ॥३९॥**
**तमुवाच नत मूर्ध्ना देवानामादिरव्यय ।**

**अत्र चिन्तामूला स्मृतिः। विच्छित्तिविशेषाभावान्न कश्चिद्-लङ्कारः। एतदुभयव्यावृत्त्यर्थं सादृश्यमूलेति विशेषणम्।**

## सुधा

अत्र स्मृतेश्चिन्तामूलतया सादृश्यमूलत्वाभावान्नातिव्याप्तिः, विच्छित्तिविशेषाभावेनालङ्कारताया बाधात्। उभयत्र विशेषणफलमाह—**एतदुभयेति**। उभयत्रातिव्याप्तिवारणाय—**सादृश्यमूलेति** विशेषणम्।

अत्र **रसगङ्गाधरकृतः**—सदृशासदृशयोः केशपाशजलनिधिमन्थनयोः स्मरणसंग्रहाय वस्त्वन्तरग्रहणमर्थवदित्युक्तमयुक्तम्। सादृश्यमूला स्मृतिः स्मरणमित्येतावता केशपाशस्येव जलनिधिमन्थनस्मरणस्यापि संग्रहेण तद्विशेषणस्य व्यर्थत्वात्। सादृश्यदर्शनोद्बुद्धसंस्कारजन्यत्वस्य सादृश्यदर्शनोद्बुद्धसंस्कारजन्यलक्ष्मीस्मरणोद्बुद्धसंस्कारजन्यत्वस्य च सादृश्यमूलताया विशेषाभावात्। यदपि 'सौमित्रे' इत्यादौ व्यङ्ग्यस्मृतिवारणाय अव्यङ्ग्यमित्युक्तम्, तदप्ययुक्तम्: जानक्यालम्बनो निशासमयोद्दीपितः सन्तापाद्यनुभावित उन्मादादिसञ्चारिपोषितो विप्रलम्भः प्रधानतया व्यङ्ग्यः। तत्र च स्मृतेरुत्कर्षहेतुत्वादलङ्कारताया एव कथनौचित्यात्, तदर्थं तदुपादानस्य सुतरां व्यर्थत्वाच्च।

यत्तु—'अत्युच्चाः' इत्यादौ स्मृतेः सञ्चारिभावस्य राजविषयकरतिभावस्याङ्गत्वात् प्रेयोऽलङ्कारः, तद्व्यावृत्तये **सादृश्यमूलेति** विशेषणम्, तदप्ययुक्तम्; अत्र स्मृतेर्भावत्वाभावात्, व्यज्यमानस्यैव सञ्चारिणो भावत्वात्। स्मरतिना वाचकेन वाच्यस्य तस्य तस्य[?]त्वे "व्यभिचारिरसस्थायिभावानां शब्दवाच्यता" [का. प्र. उ. ७, सू. ८२] इत्युक्त्या दोषग्रस्तत्वात् कथमस्य प्रेयोऽलङ्कारता? "भूविषयकरते राजविषयकरतिरूपभावाङ्गतयैव भूविषयो रत्याख्यो भावो राजविषयकरतिभावस्याङ्गमित्यादिना तस्य काव्यप्रकाशकारादिभिः प्रतिपादितत्वात्" इति वदन्ति।

तत्रोच्यते—"सादृश्यमूलत्वं स्मृतित्वम्" इत्येतावदुक्तौ स्त्रीसादृश्येन श्रियः स्मरणस्यैव साक्षात् सादृश्यमूलतया तत्सम्बन्धिनो जलनिधिमन्थनस्य स्मृतेर्वस्त्वन्तरसमाश्रयणरूपविशेषणबलेनैव लाभात्। वस्त्वन्तरं लक्ष्मीरूपं तत्सम्बन्धेनैव तत्स्मृतेर्योग्यत्वात्। किञ्च 'सौमित्रे' इत्यादावपि कुरङ्गसम्बन्धिनयनसदृशजानकीनेत्रस्मरणस्य शब्दशक्त्यप्रतिपाद्यत्वेन व्यञ्जनागम्यतया व्यङ्ग्यस्मृतेः प्रधानतया रामविषयकविप्रलम्भरूपव्यङ्ग्यपोषकतया व्यङ्ग्यत्वसत्त्वे तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणस्यावश्यकत्वात्। 'स तथेति' इत्यादौ चिन्तामूलस्मरणेऽतिव्याप्तिवारणाय सादृश्यमूलेति विशेषणस्याप्यावश्यकत्वात्। भुजस्मरणेन वाचोमुद्रणस्य सत्त्वेन तस्य राज-

